“ जाता पञ्च मतिश्रुतावधिमनःकैवल्यपुत्राः प्रभोः, तन्मध्ये श्रुतनन्दनो भगवता संस्थापितः स्वे पदे ।
अङ्गोपाङ्गयुतश्च पुस्तकगजाध्यारोहलब्धोदयः, सिद्धान्ताभिधभूपतिर्गणधरामात्यश्चिरं नन्दतात् ॥ १ ॥ ”

अतो ज्ञानस्य पुस्तकस्य च यथाशक्ति भक्तिः कार्या । यथाऽमुत्र परत्र च सर्वसौख्यसंपत्तिः स्यात् । स-
कलकलाश्च विलसन्ति । यश्च ज्ञानपुस्तकयोराशातनां करोति, स निबिडज्ञानावरणीयकर्म बद्ध्वाऽनेकदुःखवि-
भागी महामूर्खश्च जायते, यथा कामदेवः । यदि च पश्चादपि ज्ञानपुस्तकयोर्भक्तिं करोति, तदा सुखी भोगी
विद्वांश्च भवति, यथा स एव कामदेवः पश्चात्प्रौढराज्य-प्रताप-विद्या-कला-पात्रं जातः । तथा यदि कोऽ-
पि जीवो जन्मतोऽपि यावज्जीवं सर्वप्रकारैर्ज्ञानमाराधयति, तदा सर्वदैव स सर्वसौख्यपात्रं स्यात् महाप्राज्ञ-
श्च, यथा कामदेवस्यैव भार्याऽभङ्गुरभाग्या सौभाग्यमञ्जरी । तथाहि—

अत्रैव जम्बूद्वीपे भरतक्षेत्रे श्रीपञ्चमतीर्थङ्करश्रीसुमतिनाथवारकेऽयोध्या नाम नगरी वर्त्तते ।

पूर्वं प्रभुश्रीऋषभस्य राज्य-प्राज्यप्रतिष्ठासमये निरीक्ष्य ।
विनीतलोकान् भरते विनीते-त्याख्यां पुरीं स्थापितवान् हरिर्याम् ॥ १ ॥
असंख्यकालेऽतिगते विपक्ष-लक्षैरयोध्यस्फुटवीरकोटेः ।
निवासभावादथ साप्ययोध्ये-त्याख्यां क्षितौ लक्षणया प्रपेदे ॥ २ ॥

तस्यामयोध्यानगर्यां वर्यांशुजालदेदीप्यमानभालः प्रबलपराक्रमाक्रान्तभूपालः प्रत्यर्थिसार्थिकालः

समुज्ज्वलाशेषगुणविशालः श्रीसूरदेवनामा महीपालः प्राज्यं साम्राज्यं भुङ्क्ते ।

यस्य प्रतापतपनः स्फुटभासुरश्रीः, संपूर्णमण्डलयशःशशभृच सौम्यः ।
द्वौ संगताविह तिरस्कृततस्तमांसि, नित्यं जगत्सु किल कस्य न चित्रमेतत् ॥ १ ॥

तस्य च कान्ता सहजनिर्मलस्वान्ता पापमार्गचलनं प्रति परिश्रान्ता शीतलशीलच्छायातरुतलविश्रान्ता पट्टदेवी सूरकान्ता । सा च भर्तुः प्रसादेन सकलसंसारसुखानि भुञ्जानापि पूर्वकृतकर्मवशादपत्यसुखं न प्राप । अन्यदा मनोमुदा क्रीडार्थं निजावासद्वारिकयाऽशोकवनिकामध्यं गत्वा अशोक–पुन्नाग–नाग–प्रियङ्गु–पाटला–सहकारसारवृक्षलक्ष्मीं विलोकमाना प्रौढप्रासादमध्ये कामदेवप्रतिमां प्रणम्य गवाक्षे शीतलानिलपानायोपविष्टा ।

अथ दृष्टाऽनया गवाक्षविवरेण विलोकमानया तरुतले निजबालकान् खेलयन्ती कुक्कुटी । तद्यथा–

चरणग्गेणं भूमि विलिहन्ती बालए पलोयंती । पक्खेहिं रुछायंती पिट्ठीए पुणोवि रोवंती ॥ १ ॥
मुहमज्झे निपपमुहं पक्खिवविय पुणो पुणो चुणि दिंती । कुकुकुरवं कुव्वंती कीलंती कुक्कुडी दिट्ठा ॥ २ ॥

अथ राज्ञी निजबालैः क्रीडन्तीं कुक्कुटीं दृष्ट्वाऽनपत्यतादुःखं स्मृत्वा महादुःखार्ता मनस्येवं चिन्तयामास । धन्याऽसौ तिरश्च्यपि कुक्कुटी, या सदा निजापत्यक्रीडासुखमनुभवति । यतः–

ते धन्ना जाण घरंगणम्मि दीसंति धूलिधवलाइं । उट्ठंत पडंत रडंत चेव दोतिन्नि डिंभाइं ॥ १ ॥

अथवा–यत्र नास्ति गुणगौरवपूजा, यत्र न स्वजनसङ्गतिरुच्चैः ।
यत्र नो लघुलघूनि शिशूनि, हन्त तान्यपि गृहाणि गृहाणि ॥ २ ॥

किञ्च–अपुत्रस्य गृहं शून्यं, दिशः शून्या ह्यबान्धवाः । मूर्खस्य हृदयं शून्यं, सर्वशून्यं दरिद्रता ॥ ३ ॥

तोयं विना तटाकः, सुरेन्द्रं विना नाकः, न्यायं विना भूमान्, दानं विना श्रीमान्, विनयं विना शिष्यः, पत्र–पुष्प–फलानि विना वृक्षः, प्रज्ञां विना छात्रः, जीवं विना गात्रम्, घ्राणं विना यथा न शोभते वदनं, तथा पुत्रं विना सदनम् । अतः सर्वथा मन्दभाग्याऽहम्, याऽनेकभूपालप्रणतपादारविन्दमहानरेश्वरप्रसादपात्रमपि भूत्वा चिन्तितमात्रोपस्थितसकलवस्तूनि लभमानाऽपि मनागपि नापत्यसुखं प्राप्नोमि । ततः किं कार्यं प्राज्येन राज्येन, किं कार्यमनेकसारनिवेशेन महादेशेन, किं कार्यं मनोहारेण नगरेण, किं कार्यं सर्वसुन्दरस्वरूपेण रूपेण, किं कार्यं कल्पद्रुमानुवादेन महाराजप्रसादेन, किं कार्यमुदारैः शृङ्गारैः, किं कार्यमनुकूलैः दुकूलैः, किं कार्यं सर्वरागमूलैस्ताम्बूलैः, किं कार्यमपरैरपि स्फारैरलंकारैः, किं कार्यं स्नेहगेहेन देहेन, हा किं कार्यं भव्येनापि जीवितव्येन, सर्वथा न शक्नोमि क्वापि स्थातुम्, पक्ववालुंकमिव स्फुटति मे हृदयं महादुःखेन, किं करोमि, क्व गच्छामि, कस्याग्रे कथयामि ।

हा मातः ! किमहं जाता हा पितः ! पालिताऽस्मि किम् । हा भर्त्तः ! परिणीता किं यदेव दुःखिताऽभवम् ॥ १ ॥
झोली तुटी कि न मूइ कि न हूअ छारह पुंज । न सहत जिम हूं एवडी दूप दवानल झुंज ॥ २ ॥

इत्यादिमहाशोकसंकुलचिता चिन्ताकल्लोललोलितजीविता महाऽऽर्तध्यानपतिता भूमिकानिवेशितदृष्टिः
करतलन्यस्तमुखी पादाङ्गुष्ठेन पृथिवीं खनन्ती दीर्घोष्णनिःश्वासैरोष्ठसंपुटं धमन्ती स्थूलस्थूलाश्रुधाराभिर्भू-
तलं सिञ्चन्ती यावता सूरकान्ता राज्ञी महादुःखमनुभवति, तावता तस्याः परिवारमुखेन तत्पट्टमहादेवीदुःखं
विज्ञाय विच्छायवदनः समुत्सुकमनाः सूरदेवो राजा झटिति सिंहासनं मुक्त्वा त्वरितत्वरितपदैस्तत्र स-
मागतो दुःखपूरपूरितचित्तामधोमुखीं देवीं निरीक्ष्य करे धृत्वा पुरः स्थित्वा हा देवि ! कस्मादकस्मादसावेता-
वान् शोकः क्रियमाणोऽस्ति इत्यवादीत् ।

राज्ञी च महादुःखचिन्तासंकुचितलोचने सहसोन्मील्य पुरःस्थितं प्राणप्रियं विलोक्य हा ? पादावधा-
रितः पृथ्वीपतिरपि न ज्ञातः शून्यतया, न च कुलस्त्रीसमुचितोऽभ्युत्थानादिविनयः सत्यापितः, इति दग्धो-
परि स्फोटकतुल्यं दुःखोपरि दुःखं बिभ्रती सहसाभ्युत्थाय प्राणप्रियपादयोर्लोचने दत्वा सूर्यास्ते कमलिनीव
मुकुलितमुखी पूर्ववदेवास्तोकशोकक्लेशमनुभवन्ती योजिताञ्जलिः पुरतः पाञ्चालिकेव निश्चलाऽतिष्ठत् ।

अथ राजा निजवस्त्राञ्चलेन राज्ञीनेत्रे प्रमार्ज्य स्नेहसारया सुधामधुरया वाचा प्रोवाच–"देवि ! कोऽयमाक-
स्मिकः शोकः, न पश्यामि खलु मनागपि शोकहेतुम् । यतस्तव पितुर्गृहे कुशलिनौ मातापितरौ, विजयिनो
बान्धवाः, सुखवान् सकलस्वजनलोकः । अत्रापि मयि सुप्रसन्ने को नाम किङ्कर इव तवादेशं नो कुरुते, को
नाम मनसाऽपि त्वयि वैरूप्यं चिन्तयति, के नाम मनोरथास्तव न पूर्यन्ते । एवं सति वद देवि ! किं ते दुःखम् ?

परेवं पाप्पहतदर्पण इव दृश्यते विच्छायवदनम्, जलक्लिन्नवस्त्रादिव गलन्ति नेत्रद्वयादश्रुबिन्दवः, दवानलाश्लिष्टकाष्ठमिव दंदह्यते हृदयम्, ग्रीष्मातपतप्तवालुका इव जाज्वल्यन्तेऽङ्गानि, निद्रां गतस्येव धत्ते शून्यतां मनः, तदाशु मुञ्च मौनम्, ब्रूहि शोककारणम् ।" इत्येवं महाग्रहपूर्वकं पुनःपुनः पृच्छति पृथ्वीनाथे निःश्वस्य गदगदस्वरं कथमप्युवाच देवी–" हा निष्पुत्राऽहं मन्दभाग्या " इति । तच्च श्रुत्वा निर्मलदर्पणतले पुरःस्थपदार्थवत् तत्कालं हृदये संक्रान्तसकलदुःखश्रीसूरदेवः सुचिरं विमृश्य स्नेहलया दृशा दुग्धधारयेव सिञ्चन्नुवाच-

" देवि ! प्राणप्रिये ! अहमपि जाने आत्मीये महाशल्यमेतत् । यतः– कुलदीपकमेकं नन्दनं विना मूलतोऽप्युच्छिद्यन्ते सर्वे धर्मकर्ममार्गाः । प्रलीयन्ते वर्धमानोत्तरोत्तरमनोरथाः । नश्यन्ति पूर्वजपुण्यप्रबन्धाः । परं किं क्रियते ? न कोपि प्रतिमल्लः कर्मणाम् । यदुक्तम्—

यथायथादृशं येन कृतं कर्म शुभाशुभम् । तत्तथा तादृशं कर्म फलत्येव न संशयः ॥ १ ॥ किञ्च–

उदयति यदि भानुः पश्चिमायां कदाचित्, प्रचलति यदि मेरुः शीततां याति वह्निः ।

विकसति यदि पद्मं पर्वताग्रे शिलायां । न च भवति हि मिथ्या भाविनी कर्मरेखा ॥ २ ॥ अपिच,

यद्भाव्यं तद्भवत्येव, नाभाव्यं तु भवेत्क्वचित् । वल्मिकादिन्द्रचापः स्यान्न तु रत्नाकरादपि ॥ ३ ॥ ततो देवि ! मा रोदीः, धीरा भव, मनःप्रसत्तिं भज, सर्वं भव्यं भावि, " । इति राज्ञोवचनं श्रुत्वा किंचित्सा रोषेव जगाद देवी–" नाथ ! मैवमुदासीनं वचोऽवोचः । नहि विचक्षणेन भवितव्यैकचित्तेन भाव्यम् । किन्तु कार्य-

सिद्धिं वाञ्छता यथोचितोपक्रमः कार्यः । उक्तं च—

उपक्रमादेव हि कार्यसिद्धिरुपक्रमादेव कुटुम्बवृद्धिः । उपक्रमादेव हि कष्टभङ्ग उपक्रमादेव हितार्थसङ्गः ॥ १ ॥

ततो महाराज ! नैमित्तकान् पृच्छ, तीर्थानि गच्छ, दानानि यच्छ, तपांसि तप्यस्व, मन्त्रान् जञ्जप्यस्व, कुलदेवतामाराधय, विद्याः साधय, यथा विलीयन्तेऽन्तरायाः, क्षीयन्ते दुष्टकृता माया, उज्जृम्भन्ते कल्याणकथाः, सिध्यन्ति सर्वे मनोरथाः ।" इति श्रुत्वा जगाद राजा "देवि ! युक्तमुक्तम्, तथोपक्रमो करिष्यते सर्वमनोरथसिद्धिर्भविष्यति" इत्येवं वदति भूपालेऽनाहतगम्भीरदुन्दुभिध्वनिरारामदेशोपरि बभूव । तं च श्रुत्वातीव हृष्टमना महीपतिः नूनमस्मादाकस्मिकशकुनादस्मन्मनोरथसिद्धिर्भविष्यति । इति चिन्तयन् यावदूर्ध्वमालोकयति, तावत्पश्यत्युदञ्चन्मरीचिवीचिभिर्गगनतलमापूरयन्ति चलत्पताकाभिः प्रनृत्यन्ति बाह्यारामं प्रत्यवतरन्ति देवविमानानि । "किमेतद्" इति विचारयन्नरेशः शीघ्रमेव सभामागत्य यावन्निविष्टस्तावदारामपालकः प्रणम्य विज्ञप्तवान्-" हे देव ! केवलज्ञानी कोऽपि मुनीश्वरः संप्रति तव पुरारामभूमौ समवसृत्य देवतानिर्मितकनककमलमलञ्चकार । विमानाधिरूढः सुरसमूहोऽवततार " । राजापि तस्य पारितोषिकदानं दत्त्वाऽहो दिष्टया केवलिनं नत्वा " निष्पापाः निःसंदेहाः सिद्धसाध्याश्च भवामः " इति सानन्दं वदन् सान्तःपुरपरीवारो महत्या ऋद्ध्या वनमध्ये गत्वा, विधिना केवलिनं स्तुत्वा नत्वा च यथोचितक्षितिपीठे निविष्टवान् । ततः-केवली सुधामुचा वाचा धर्मदेशनां प्रारेभे—

सुकुलजन्म विभूतिरनेकधा प्रियसमागमसौख्यपरंपरा ।
नृपकुले गुरुता विमलं यशो भवति धर्मतरोः फलमीदृशम् ॥ १ ॥

तथा--यद्दौर्भाग्यमनाथता विकलता नीचे कुले जन्मता दारिद्र्यं स्वजनाच्च यत्परिभवो दौस्थ्यं परप्रेष्यता ।
पुत्राप्राप्तिरनिर्वृत्तिः कुशयनं कुस्त्री कुभुक्त रुजः सर्वं पापमहीरुहस्य महतो व्यक्तं फलं दृश्यते ॥२॥

इत्यादि । ततश्चैतां देशनां श्रुत्वा महीपालो मुनीश्वरं नत्वाऽप्राक्षीत्--" भगवन् ! केन कर्मणा मम देव्याश्चानपत्यता दुःखम् ।" केवली प्रोवाच--" राजन् ! अत्रैव द्वीपेऽत्रैव क्षेत्रेऽचलग्रामे विक्रमः कौटुम्बिको विक्रमदेवी भार्या, तयोरपत्यानि प्रातिवेश्मिकब्राह्मणबालैः सह क्रीडन्ति । अन्यदा निष्पन्नकृषिकर्मवीक्षणाय तौ क्षेत्रं गतौ । निजबालैः सह विप्रबालान् फलिकाचिर्भटादि भक्षयतो दृष्ट्वा महाकोपादूचतुः--' रे रे ! दुराचाराः केनाकारिता भवन्तः, सर्वमपि क्षेत्रं भक्षितम्, यत्क्रियते युष्माकं तत्सर्वमपि स्तोकम्, परं किं क्रियते ? प्रातिवेश्मिकत्वदाक्षिण्यं महत्, रक्षकस्यापि प्रातिवेश्मिकापत्यानि भवन्ति, इति ॥ " पुनः पुनर्भणनात्सन्तानान्तरायकर्म बद्धम् । अज्ञानभावान्न पश्चातापः कृतो न चालोचितम् । ततो गृहं गताभ्यां ताभ्यां कदाचिन्मासोपवासिमुनेर्घृतसिना संयुतं पायसं भावभक्त्या दत्त्वा भोगफलं कर्मोपार्जितम् । तेनेदं युवाभ्यां राज्यं प्राप्तम्, सन्तानान्तरायकर्मणा चानपत्यतादुःखमिति ।" केवलिवचसा निजं पूर्वभवं श्रुत्वा राजा राज्ञी चाहो अज्ञानभावात्कथं जीवा लीलयैव कर्मबन्धं कृत्वाऽऽत्मानं क्लेशसागरे पातयन्ति ।धिग्

धिग् आवाभ्याम्, कीदृग् दुष्टु भाषितम्। नातः परं मनसापि कस्याप्युपरि विरूपं चिन्तयिष्यावः। प्रभो! प्रसादं कुरु, प्रायश्चित्तं देहि, अस्मान्महापापान्निस्तारय, इति पुनःपुनर्वदन्तौ मनःशुद्ध्याऽऽत्मानं निन्दन्तौ केवलिनं प्रणेमतुः। केवल्यप्यवोचत्—

सुखेन बध्यते कर्म, तद्विपाकस्तु दुस्तरः। हसन्ती गर्भमादत्ते, रुदन्ती तं विमुञ्चति ॥ १ ॥

किञ्च—स्पृष्ट-बद्ध-निद्धत्त-निकाचितभेदाच्चतुर्विधमिदं कर्म तत्र यथा सूचिकापुञ्जः पृथिव्यां मुक्तः परस्परं स्पृष्टस्तावदेव पिण्डितस्तिष्ठति, यावत्कस्य करः क्रमो वा न लगति, तस्मिन् पुनर्लग्ने विशरारुभावं भजते। एवं यत्कर्म सोपयोगस्यापि सहसाकारेण लग्नमालोचनामात्रेणापि विलीयते तत्स्पृष्टमुच्यते। स एव शूचीराशिर्दवरकबद्धः कराङ्घ्रिस्पर्शेऽपि न पृथग्भावं याति, किन्तु बन्धे छोटिते सति। एवं कथादिप्रमादाज्ज्ञातप्राणातिपातादिदोषैर्निबद्धं यत्कर्मालोचनाप्रतिक्रमणाभ्यां क्षीयते तद् बद्धमुच्यते। स एव शूचीसमुदायो बन्धबद्धो यथा यथा चिरं तिष्ठति तथा तथा तासां काट्टेन मिथो बद्ध इव जातो बन्धे छोटितेऽपि नहि पार्थक्यं प्राप्नोति, किन्तु तैलम्रक्षणाग्नितापलोष्टघर्षणादिबहूपक्रमेण। एवं यत् कर्म धावनवल्गनादिदर्पेणोपेत्य करणरूपाकुट्टिकया वोपार्जितं चिरमनालोचितत्वाज्जीवप्रदेशैः सह गाढं निबद्धं तीव्रपश्चात्तापनिन्दागुरुदत्तघोरषाण्मासादिकादितपसा प्रलीयते तन्निधत्तमभिधीयते। तथा स एव सूचीकलापोऽग्निध्मातो लोहघनकुट्टितो लोहमयपिण्डभावं प्राप्तो बहुनाऽप्युपक्रमेण पृथक्त्वं नैव याति, किन्तु यथा लोहपिण्डः कृतस्त-

धा चेद् भक्त्या सक्त्वा नवीना घटयन्ते तदा ताः पृथक् पृथक् सूचयः स्युः, एवं यत्कर्म जानता जीवेनाकु-
ट्टिकया कृतं महादुष्टभावेन च भव्यमेतच्चक्रे पुनरपीत्थमेव विधास्यामि, इति पुनः पुनः सम्यतमनुमोदितं
मनागप्यनालोचितत्वाज्जीवप्रदेशैः सह गाढैकत्वं प्राप्तम्, तच्च यथा कृतं तथैव वेदनेन घोरतपसा वा
क्षीयते नान्यथा, इत्येतन्निकाचितं कथ्यते ।

भयद्भ्यां च पूर्वभवे " रक्षकस्यापि प्रातिवेश्मिकापत्यानि भवन्ति " इति दुष्टपापवाक्यानां पुनः पुन-
र्भणनात्तदनु कदाचिदनालोचितत्वान्निकाचितप्रायमपत्यान्तरायं कर्म बद्धम् । एतच्च बहुतरमेतावत्कालं
स्वयमनुभवनादधुना च निन्दागर्हादिपूर्वमालोचनात्कियन्मात्रं क्षीणं शेषं च दशविधप्रायश्चित्तान्तर्गतषष्ठ-
भेदविशिष्टतपोरूपप्रायश्चित्तेन क्षयं यास्यति । तप प्रायश्चित्तं च श्रीआदिदेववारके उत्कृष्टं द्वादशमासिकम्,
मध्यमद्वाविंशतितीर्थंकरवारकेऽष्टमासिकम्, अपश्चिमजिनश्रीवीरवारके पाण्मासिकम् । " तवमा निकाइ-
याण वि कम्माण खओ हवइ नियमा " इति हि सर्वज्ञकेवलिवचः । अनुज्ञातं चेदं तपः कर्मनिर्जरार्थम् । "नो
इह लोगट्ठयाए तवमहिट्ठिज्जा, नो परलोगट्ठयाए तव महिट्ठिज्जा, नो कित्तिवन्नसद्दसिलोगट्ठयाए तवमहि-
ट्ठिज्जा, नन्नत्थ निज्जरट्ठयाए तव महिट्ठिज्जा । " ततोऽवशिष्टदुष्टान्तरायकर्मनिर्जरार्थमष्टोत्तरशताचाम्लरूपं
तपः प्रायश्चित्तं युवयोर्वर्तते । तच्च सम्यक्त्वमूलद्वादशश्राद्धव्रतधारिणामतीव सफलं स्यात, इति सर्वं सम्य
क्त्वस्वरूपं द्वादशव्रतविचारं भगवान् व्याख्यातवान् ।

अथ च पृथिवीपतिः सपत्नीकोऽपि महता संवेगरङ्गेण पूर्वभवाचीर्णं स्वकीयदुश्चरितं सर्वं सम्यगालोच्य तादृशेभ्यः पापेभ्योऽपुनःकरणेन निजं मनः संकोच्य केवलिप्रोक्तं प्रायश्चित्तं प्रतिपद्य सद्यः सम्यक्त्वालङ्कृतं श्रावकधर्मं स्वीकृत्य महाभक्त्या भगवन्तं नमस्कृत्य यावत्पुरं प्रति प्रचलति, तावत्पुरः प्रादुर्भूतः प्रभूतभूषणभरभासुरः कोऽपि सुरः।

स च व्यस्य! पश्य पश्य कीदृशः श्रीपञ्चपरमेष्ठिमहामंत्रस्य प्रभावः, कस्य नाम नाश्चर्यं कुरुते विचित्रं मे चरित्रम्, तदागच्छ स्वच्छमते! भगवन्तमेव पृच्छ, अनपत्यतादुःखस्य जलाञ्जलिं यच्छ। भास्वति सर्वान्धकारतिरस्कारं कुर्वति कोऽर्थः प्रदीपेन, इति भूपतिं बाहौ धृत्वा श्रीकेवलिनः प्रदक्षिणात्रयं दत्वा भूतलमिलद्भालं भक्त्या भगवन्तं प्रणम्य सम्यग् योजिताञ्जलिः प्रपच्छ निजपूर्वभवोदन्तम्। केवली प्राह—"अत्रैव जम्बूद्वीपे भरतक्षेत्रेऽयोध्यायां प्रथमतीर्थंकरश्रीऋषभपुत्रः श्रीभरतश्चक्रवर्ती बभूव। स चान्यदा श्राद्धानाकार्याद्यप्रभृति मदावासे भोज्यं नित्यम्, धर्मध्यानं कार्यम्। " जितो भवान्, वर्द्धते भयं, तस्मान्मा हन, मा हन इत्यादि ममादर्शे रूपं पश्यतोऽग्रे पठनीयम् " इत्यादिशत्। तेषु च तथा कुर्वत्सु प्रत्यह भोक्तारो वर्द्धन्ते. ततस्तेषां संख्या न लभ्यते, अतो वयं किं कुर्म इति सूपकारैर्विज्ञप्तः सम्यग्धर्मे परीक्षां कृत्वा शुद्धश्राद्धानां हृदये काकिणीरत्नेन रेखात्रयं चक्री चक्रे। तत्पठनार्थमार्यवेदान् विधाय, षट्षण्मासातिक्रमेषु परीक्षां चाकरोत्। भरतेऽथ मोक्षं प्राप्ते तस्याष्टसंतानिभिरादित्ययशोमुख्यैर्भरतार्द्धं भुक्तम्। ते श्रा-

द्धाश्च तथैव भोजिताः ।ततोऽपरैरपि तद्वंश्यैः श्रीअजितनाथं यावत् श्राद्धा गौरविताः ।ते च मा हन मा हन इति पाठात्काले ब्राह्मणा इति आख्याताः । तेषां वंशेऽसंख्ये काले गते तव पूर्वभवे तव प्रातिवेश्मिकः सोमशर्मब्राह्मणोऽभूत् । यस्य बालाः क्षेत्रे भवद्भ्यां पूर्वभवे शप्ताः । स च विप्रः क्रियावानपि कुसंसर्गान्मांसलुब्धः स्वभार्यां प्रोचे–" नित्यं मत्कृते मांसं प्रक्तव्यम् । " सा च तथा करोति। अन्यदा रात्रौ संस्कृतमयूरमांसे मार्जारभक्षितेऽन्यमांसालाभेऽनाथबालं मृतं संस्कृत्य ददौ। विप्रश्चापूर्वास्वादात्तज्ज्ञात्वा महामांसलुब्धः प्रत्यहं बालं घ्नन् राज्ञा निर्वासितोऽरण्ये पलादो जातः । एकदा पथि गच्छतः साधून् हन्तुं धावितः । साधुभिश्च परमेष्ठिपाठात् स्तम्भितः प्रबोधितो नमस्कारं पाठितश्च, हिंसां मुक्त्वा गिरिगुहायां स्थितो लोकैर्ज्ञात्वा हतः परमेष्ठिमंत्रध्यानात्स्वर्गं च गतः, सोऽयम् । ममैषा कुतो देवर्द्धिरिति ज्ञानोपयोगान्नमस्कारफलं ज्ञात्वाऽत्रास्माघन्तुमागतः । त्वां प्राग्भवमित्रं निरीक्ष्य नमस्कारमाहात्म्यज्ञापनार्थं स्वपूर्वभवमस्मानप्राक्षीत् ।

अथ श्रीसूरदेवो राजा केवलिमुखादिति श्रुत्वा चमत्कृतचित्तोऽचिन्तयत्–" अहो श्रीनमस्कारस्य महिमा, यद् ध्यानादेवंविधो बालहत्याकारकोऽपि स्वर्गं गतः । तदेतदेव ध्यायते । " इति विचिन्त्य नमस्कारस्य स्वरूप–फल–जापविधीन् प्रपच्छ केवली प्राह–

रागद्दोसकसाए इंदियाणि य पचवि । परीसहे उवसग्गे नामयंता नमोऽरिहा ॥

इत्यादि नमस्कारस्वरूपम् ।

तथा-इह लोइ अत्थकामा आरुग्गं अभिरई अ निप्फत्ती । सिद्धी अ सग्ग सुकुलप्पचायाई अपरलोए ॥

इत्यादि फलं चोक्त्वा जापविधिं स्माह-" यः किल पुमान् पवित्रदेहवस्त्रस्त्रिसन्ध्यं विधिना जिनं पूजयित्वा तदग्रे सुखासननिविष्टः सुश्लिष्टौष्ठपुटो नासाग्रन्यस्तदृष्टिर्दन्तैरस्पृष्टदन्तः प्रसन्नवदनोऽप्रमत्तः स्थिरचित्तस्त्रिशुद्धिपालितशीलो विशिष्टतपोनिष्ठोऽखण्डोज्वलपालकसत्ताक्षतैस्त्रिःकृत्याष्टोत्तरशतं नमस्कारान् जपति, स आस्तां स्वर्गादि सम्पद्, परिणामनैर्मल्यवशात्तीर्थंकृद्गोत्रमप्युपार्जयति । यश्चानया नियन्त्रणया स्मर्तुं न शक्नोति सोऽपि यथासंपन्नयुक्त्या लक्षजापं कृत्वा यदि लक्षाक्षतान् देवस्य ढौकयति तदा निर्मलसम्यग्दृष्टित्वं लभते । घोरपापकर्मापि यः पापनिवृत्तः कोटिजापादनु कोटितन्दुलान् ढौकयति, सोऽपि सर्वपापनिर्मुक्तः सप्ताष्टभवान्तः सिध्यति, परं मनःस्थैर्यानुसारेण सर्वत्र फलमिति । तदुपायो भण्यते-इह जापस्त्रिधा पूर्वानुपूर्व्या पश्चानुपूर्व्या अनानुपूर्व्या च । तत्र यथोक्तपदानां क्रमात्पाठः पूर्वानुपूर्वी । अनया च जापो मनःस्थैर्यार्थं कमलबन्धेन कार्यः । स चैवम्—

नाभिदेशोऽथनाले ब्रह्मरन्ध्रप्रतिष्ठिते । ध्यातमष्टदले पद्मे तत्त्वमेतत्फलप्रदम् ॥ १ ॥

तत्राद्यपदोच्चारे पद्मस्य कर्णिकायामष्टप्रातिहार्योपेताः श्वेतवर्णा अर्हन्तो ध्येयाः । द्वितीयपदोच्चारे ललाटोपरिस्थदले सिद्धासनोपविष्टा रक्तवर्णाः सिद्धाः । तृतीयपदोच्चारे दक्षिणकर्णोपरिस्थदलेप्रवचनमुद्रया

सूरिमंत्रं स्मरन्तः सुवर्णवर्णा सूरयः। चतुर्थपदोच्चारे ग्रीवोपरिस्थपश्चिमदले शिष्यानागमं पाठयन्तो नीलवर्णा उपाध्यायाः। पञ्चमपदोच्चारे वामकर्णोपरिस्थदले कायोत्सर्गस्थाः श्यामवर्णाः साधवः। यदि वा पञ्चापि परमेष्ठिनः प्रोक्तपञ्चस्थानेषु स्फटिकवर्णा ध्याताः सर्वकर्मक्षयाय सर्वव्याधिक्षयाय भवन्ति। इति केवलिवचः श्रुत्वा राजा विधिना नमस्कारलक्षजापं विधास्यामि, इति निश्चित्य केवलिनं नमस्कृत्य "साधु त्वया कृतं यदहं परमेष्ठितत्त्वं ज्ञापितः, प्रत्युपकारकोटीभिरपि तवानृणो न भवामि" इति प्रीतिगिरा मित्रदेवं विसृज्य पुरान्तः समेत्य देशान्तरमायुंदुघोषणां कारयित्वा स्वस्थचित्तीभूय सपत्नीकः परमेष्ठिमन्त्रस्य यथोक्तविधिना लक्षजापं प्रारेभे। स चैवम्–

प्रातः स्तोकजलस्नानः शुचिश्वेताव्यङ्गवासाः कृताचाम्लतपाः श्रीसर्वज्ञं पूजयित्वाऽखण्डशीलोऽखण्डाक्षतैश्चतुर्विंशत्यधिकं शतत्रयं जपति, इत्थं मध्याह्ने सन्ध्यायां च। एवं चाष्टोत्तरशताचाम्लैः साधिके लक्षजापे पूर्णे क्षीणमशेषमन्तरायकर्म। ततः पारणकदिने सर्वजिनचैत्येषु महापूजां कारयित्वा, दीनादीनानुचितदानं दत्त्वा, सारस्निग्धाशनैर्धार्मिकान् भोजयित्वा, साधून् शुद्धाहारैः प्रतिलाभ्य, सिताघृतपायसादिना पारणं कृत्वा, सर्वसंसारव्यवहारान् सत्याप्य, सुखं सुष्वाप।

इतश्च कस्मिंश्चित्पुण्यवति जीवे गर्भं प्राप्ते कामदेवः समेत्य प्रभाभरेण सर्वा दिशो द्योतयन्तमपि किञ्चिदन्तर्धूसरबिम्बं शनैः शनैः सर्वतो दीप्तमण्डलं भास्करं ममोदरे प्रतिष्ठाप्य ईदृशं पुत्रं लभस्व।' इति

परं दत्त्वाऽहृष्टोऽभूत्। इति सुखसुप्ता राज्ञी स्वप्नं दृष्ट्वा मधुरगिरा बोधिताय राज्ञे प्रोवाच । राजापि "भास्करभासुरः सुतस्ते भावी परं बिम्बान्तर्धूसरताहेतुं न वेद्मि" इति जगाद ।.तावता शंखध्वनिना सर्वपुरमापूर्य मङ्गलपाठकः पपाठ–

किञ्चिद्धूसरबिम्बोऽपि द्युतिभिर्द्योतयन् दिशः। यः क्रमात्कान्तिमद्बिम्बो भावी सोऽर्को मुदे तु वः ॥१॥

अथ तत्स्वप्नफलं तां चोपश्रुतिं श्रुत्वा प्रमोदमेदुरा राजपत्नी शकुनग्रन्थिं बद्ध्वा पूर्ववत् पुण्यानि कुर्वती काले भव्यवेलायां सकललक्षणं पुत्रं प्रसूता । अपुत्रस्य पुत्रोत्पत्तिः प्रमोदहेतुर्विशेषतो महाराजस्य, इत्यनेके महोत्सवा जाताः। सूतकशुद्धेरनु स्वप्नानुसारेण "कामदेव" इति नाम मातापितृभ्यां दत्तम् ।

स च शुक्लपक्षे शशीव नन्दनवने कल्पद्रुम इव प्रतिदिनं प्रवर्द्धमानः, कमलेषु राजहंस इवानेकक्षितिपालोत्संगेषु क्रीडमानः, कस्य नाम मुदं नाकार्षीत्। यावता पञ्चवर्षातिक्रमे कामदेवं नरदेवः सोत्सवं लेखशालायां मुमोच। तावता विपक्षपक्षपीडयमानान् निजदेशान् ज्ञात्वा भंभावादनपूर्वं सन्नह्य सारसैन्यः स्वयं देशरक्षार्थमचालीत्। कुमारश्च पण्डितेन यथोचिततताडनया भाण्यमानोऽपि पूर्वकृतकर्मवशादक्षरमात्रमपि न बुबोध। एवं षोडशवर्षाणि व्यतिक्रान्तानि। अथ राजा वैरिणो विद्राव्य देशस्वास्थ्यमुत्पाद्य परराष्ट्रेष्वपि निजामाज्ञां संस्थाप्य जितकाशी निजपुरमागात्।

कुमारोऽपि पञ्चपताकातोरणादिना नगरमलंकार्य संमुखं गत्वा भूतलमिलद्भालो भूपालं ननाम ।

राजा प्रतिपदं जायमानापूर्वापूर्वोत्सवैः पुरान्तः प्रविश्य सिंहद्वारे सिंधुरादुत्तीर्य सर्वोत्तमवेलायां सौधान्तः सिंहासनमलंकृत्योपविष्टः। प्रणामपूर्वं पुरो निविष्टं स्पष्टराजलक्षणलक्षराजमानं प्रभूतभासा भासमानं रूपनिर्जितदेव कामदेवं सुतं वीक्ष्य " सर्वगुणसंपूर्णोऽसौ मे पुत्रो यौवनं प्राप्तः, का नाम सा कन्या धन्या यस्याः पाणिग्रहणमसौ कार्यते। " इति यावच्चिन्तयति, तावत्प्रतीहारनिवेदितः कोऽपि दूतः सभामध्ये स-मेत्य भूपालं प्रणिपत्य निजागमनहेतुं प्रोवाच– " राजन्! वाराणस्यां नगर्यां सकलशत्रुसिन्धुरवित्रासर्सिंहः श्रीवैरिसिंहः पृथिवीपालः प्रजाः पालयति। तस्य चान्तःपुरीरत्नं शीलकृतयत्नं प्रभूतगुणगुणावली। तयोः पुत्री निरुपमरूप--लावण्य-शील-कान्ति-मति-प्रज्ञाप्रमुखगुणपात्रं सौभाग्यतरुमञ्जरी सौभाग्यमञ्जरी। सा च सकलकलाः कलयित्वा नवतत्त्वादिजिनोक्तविचारावगमाद्यदा सम्यक्त्वदृढा जाता, तदा कलाचार्येण राजपा-र्श्वमानीता, राजा च निजोत्संगे तां निवेश्य परीक्षार्थं किं किं जानात्येषेति पण्डितं पप्रच्छ। पण्डितेनोक्तम्— महाराज! स्वयं परीक्षां करोतु। राजा–वत्से! दत्से पृच्छोत्तरम्? कन्या–तातस्य गुरोश्चादेशात्। राजा–प-ण्डित! प्रश्नं विधेहि। पण्डितः–वत्से! सावधानीभूयोत्तरं देहि। कन्या–पण्डित! यथारुचि प्रश्नय। अथ कथं प्र-श्नोत्तराणि भविष्यन्तीति सर्वस्मिन् सभालोके साश्चर्यं लक्षण–साहित्य–छन्दोऽलङ्कारादिविषयप्रश्नानामुत्तरे-षु कल्पनया दत्तेषु पण्डितः प्रमाणविद्यापरीक्षार्थं पूर्वपक्षमकार्षीत्–

" वत्से! अस्मिन्नसारे संसारे लक्ष्मीरेव सारं सर्वप्रकार्यसाधकत्वात्। तथाहि—सर्वधर्मार्थकामा-

नां लक्ष्मीः सिद्धिनिबन्धनम् ।न तां विना यदेकोऽपि निर्मातुं शक्यते क्वचित्॥१॥"आस्तां सर्वकार्यप्रसाधक-
त्वम्, अस्याः प्रसादेन सर्वे दोषा अपि गुणा एव स्युः । यदुक्तम्–
कोपस्तेज इति ग्रहः स्थितिरिति क्रीडेति दुश्चेष्टितं, मायित्वं व्यवहारकौशलमिति स्वच्छत्वमित्यज्ञता ।
दौर्जन्यं स्फुटवादितेति धनिनामग्रे बुधैर्यद्वशाद्, दोषेऽपि व्यपदिश्यते गुणतया तस्यै नमोऽस्तु श्रिये ॥ १ ॥

धनैर्निष्कुलीनाः कुलीनाः क्रियन्ते, धनैरेव पापात् पुनर्निस्तरन्ति
धनेभ्यो विशिष्टो न लोकेऽस्ति कश्चिद् धनान्यर्जयध्वं धनान्यर्जयध्वम् ॥ २ ॥
बुभुक्षितैर्व्याकरणं न भुज्यते, पिपासितैः काव्यरसो न पीयते ।
न छन्दसा केनचिदुद्धृतं कुलं, हिरण्यमेवार्जय निष्फलाः कलाः ॥ ३ ॥"

इति पण्डितेनोक्ते कोकिलावत्कलरवं कुर्वती कन्या स्माह—" पण्डितराज ! मैवं वोचः। मदुक्तमवधारय।
अस्मिन्नसारे संसारे सारं भगवती सरस्वती, सर्वकार्यसाधकत्वात् । तथाहि–
धर्मार्थकामसिद्धीनां मुख्यबीजं सरस्वती । ज्ञानं विना यदेकोऽपि न कर्तुं शक्यते क्वचित् ॥ १ ॥
तथा लक्ष्मीप्रसादाद्दोषाणां यो गुणव्यपदेशः स कृत्रिमः।परं सरस्वत्याः प्रसादाद्दोषा गुणीभवन्तीति सत्यमे-
व तथाहि—
कोप-कदाग्रह-दुश्चेष्टितानि दौर्जन्य-मान-लोभाद्याः । ज्ञानप्रसादतोऽमी दोषाः क्षणतो भवन्ति गुणाः ॥२॥

धनैर्निष्कुलीना इत्यादि यदुक्तं तदपि कृत्रिमम् । परं—

ज्ञानाद्भवेत्कुलीनत्वं ज्ञानान्मुच्यते पातकात् । ज्ञानात्परं न हि श्रेष्ठं ज्ञानमर्जय तत्सखे ! ॥ ३ ॥

इदं सत्यम् । बुभुक्षितैर्व्याकरणमित्याद्यपि न सात्त्विकम् । यद्गुरुप्रसादाप्तज्ञानलेशो लीलयापि सुवर्णकोटी-रुपार्जयति । ज्ञानं च विना पशुपक्षिवृक्षा हेमकोटिभिरपि किं साध्यं साधयन्ति । तथा—

लक्ष्मीः सुवर्णरूपापि हस्तपादावलम्बिनी । भूपयन्त्यन्तरात्मानं वर्णरूपापि भारती ॥ ४ ॥"

इति कन्योक्तं श्रुत्वा पण्डितोऽवोचत्—" राजकुमारि ! विचारय मद्वचः—

वयोवृद्धास्तपोवृद्धा ये च वृद्धा बहुश्रुताः । सर्वे ते धनवृद्धस्य द्वारे तिष्ठन्ति किङ्कराः १ ॥"

अथ कन्या, "अवधारयन्तु भाग्यलभ्या सभ्याः! लक्ष्मीवांस्तातः, सरस्वतीवान् पण्डितः,यदि लक्ष्मीरेव सारतया मान्या,तर्हि पण्डितः समुत्थाय राजानं प्रणमतु, नो चेत्? सरस्वती मान्या ।"इति कन्यावाचमाकर्ण्य राजानं कथं नमति? इति ॥ विद्वानपि पण्डितो विलक्षमुखोऽधो वीक्षामास ।"अहो ! कुमार्या बुद्धिः, पण्डितोऽपि कथं जितः इति सभ्यैर्घोषितेऽतीवसंतुष्टो नरेशो" वत्से ! वरं वृणु वृणु इति प्रोचे । कन्याऽप्याह—"तात ! यदि संतुष्टोऽसि, तदा यः कोपि कलासु मां जेष्यति स एव मां परिणेष्यति, इति वरं देहि, राजाऽप्येतत्प्रतिश्रुत्यामात्येन सहालोच्य पुरोपवने भूमिशुद्धिपूर्वं स्वयंवरमण्डपं समाहूतभूपस्थानार्थं सौधांश्च कारयन् सर्वत्र राज्ञां राजकुमाराणां चाकारणाय दूतान् प्रैषीत् । अहं पुनर्महाराज ! तव सपुत्रस्याह्वानार्थं प्रेषितः ।

अद्यतनदिनात् त्रिंशत्तमदिने स्वयंवरमुहूर्त्तम् । ततः पादमवधारयतु देव ! ” ।

अद्यतनदिनात् ... "वत्स ! स्वयंवरं गच्छ, स्वच्छमत्या षोडशव-

इति दूतेन प्रोक्ते श्रीसूरदेवः कामदेवमुखमालोक्य "वत्स ! स्वयंवरं गच्छ, स्वच्छमत्या षोडशव-

र्षाधीतकलाप्रमाणतः कन्यां परिणीय जयलक्ष्मीं वृणु ।" इत्यादिश्य दूतं सत्कृत्य विसृष्टवान् । अथ ताता-

देशात्कुमारः शुभेऽह्नि कृतप्रस्थानमङ्गलः स्वीयं जाड्यस्वरूपं रहो ज्ञापयित्वा विमलबोधमन्त्रिणं तस्य बुद्ध्या

बाणचन्द्र--बालसरस्वत्याख्यं पण्डितद्वयं च सहादाय प्राचालीत् ।

इतश्च परिव्राजिकैका पर्यटन्ती सौभाग्यमञ्जर्या आशिषं दत्त्वा पुरो निविश्य "वत्से ! यौवनायुर्ल-

क्ष्मीणां लाभं गृह्णासि न वा?" इत्यपृच्छत् ।"को लाभः?" इति कन्ययोक्ते तापसी स्माह--स्वेच्छया खादन-

पानादि । तथाहि—

पिब खाद च चारुलोचने ! यदतीतं वरगात्रि ! तन्न ते । न हि भीरु ! गतं निवर्तते समुदयमात्रमिदं कलेवरम्

कन्यया०—

"आयुर्यौवनलक्ष्मीणां नश्वरीणां प्रतिक्षणम् । पुण्यमेव फलं प्राह्यं परिणामसुधारसम् ॥ २ ॥"

तापसी०—

"न पुण्यं न पापं न जीवोऽस्ति भोक्ता, न च स्वर्गमोक्षादिभावोऽपि कश्चित् ।

तदेषां महाभ्रान्तिभावं विमुच्य, प्रबुद्धैः सदा पूरणीया स्ववाञ्छा ॥ ३ ॥"

कन्या स्माह–कथं नाम ज्ञायते जीवो नास्ति इति ? प्रत्यक्षेणादृश्यमानत्वात्, इति चेत् ? तर्हि त्वदीया पूर्वजा अपि तेनैव हेतुना नाभूवन्निति वक्ष्यामः, तत्कालवर्त्तमानमानवैर्दृष्टत्वात् । पूर्वजा अभूवन्, इति चेत्,तांश्च तत्तत्कालवर्त्तिज्ञानिभिर्दृष्टत्वाज्जीवोऽप्यस्ति । अथ को वेत्ति ज्ञानिनस्तेऽभूवन्नवा इति चेत् ? तर्हि तत्कालवर्तिमानवा अप्यभवन्नवा इति तुल्यमेव । अथ पूर्वजानामभावे वयं कथं भवामः ? इति अनुमानात्पूर्वजा आसन्निति मन्यते, तर्हि ज्ञानिनामभावेऽविसंवाद्यागमवचांसि कथं भवेयुरिति ज्ञानिनः, तद्दृष्टश्च जीवः किं न मन्यते । एवं च यदि जीवोऽस्ति, तदा तत्कृतं पुण्यं पापं चाप्यस्ति, अन्यथा सुखिदुःखित्वादिजगद्वैचित्र्यानुपपत्तेः । अथ जन्मक्षणादौ शुभाशुभग्रहयोगात्तद् भवति इति चेत् ? तर्हि शुभाशुभग्रहयोगोऽपि पुण्यपापनिमित्त एव वाच्योऽन्यनिमित्तादर्शनात् । अथैकस्मादेव पाषाणाज्जातयोर्बिम्बसोपानयोः पूज्यापूज्यत्ववन्निर्निमित्तं सुखिदुःखित्वमिति चेत् ? न, प्रतिष्ठितबिम्बाभिधानधनिकसोपानयोः पुण्यपुण्याभावावेव तत्र हेतुः, अन्यथा कस्यापि पुण्यवतो नाम प्रतिष्ठां विना किं नाम बिम्बं न पूज्यते । एवं पापिनो मूर्त्तिः पादप्रहारयुत्कृत्यादिविडम्बनान्यायमपि स्याच्चम् । ततो यदीत्थं पुण्यपापे विद्येते, तदा तन्निमित्तौ स्वर्गनरकौ जायमानौ केन वार्येते । किञ्च-"पुण्यपापक्षये मोक्षः" इति वचनाज्जीव इव मोक्षोऽप्यस्तीति सर्वं सुस्थम्। परं प्रबुद्धैः सदा पूरणीया स्ववाञ्छा इति चेत्तव मतम्,तदाऽदृश्यमुखी त्वं निष्काश्यैवेत्यधुनास्माकं वाञ्छास्ति तां पूरयिष्यामः । इत्युक्त्वा दृक्संज्ञया कन्यया दास्यः प्रेरिताः,ताभिश्च

मुखमर्कटिकापूर्वं तापसी गले गृहीत्वा निष्काशिता ।साथ“दक्षत्वगर्वितामेतां यावज्जीवं महामूर्खस्य पत्युः संकटे पातयामि”इति कोपात् क्वापि सातिशयं यक्षमाराध्य ‘सौभाग्यमञ्जरी मूर्खेण वादे जित्वा परिणेतव्या”इति वरं ययाचे। यक्षोऽपि “ कामदेवकुमारान्नान्यो मूर्खस्ततस्तं तस्याः पतिं विधास्यामि ” इत्युक्त्वा “कामदेवः स्वयंवरे सौभाग्यमञ्जरीं परिणेष्यति” इति स्वप्नं विमलबोधाय दत्त्वा “मया कामदेवामात्यायैष स्वप्नो दत्तोऽस्ति” इति तापस्या ज्ञापयामास। मन्त्री चासंभाव्यमेतदिति चेतस्येव स्वप्नमस्थापयत् ।

अथ प्रातः प्रयाणान्ते सभानिविष्टे कुमारे सा तापसी “वाञ्छितसिद्धिर्भवतात्” इत्याशिषं दत्त्वा सोत्साहा पुरोऽस्थात् । मन्त्री प्राह–“कथमेतत्?”सा स्माह–“कुमारः कन्यां वादे जित्वा परिणेष्यति। अत्रार्थेऽद्य रात्रौ त्वया स्वप्नोऽदर्शीति प्रत्ययः।”ततो“अहो सत्यमेतद्”इति मन्त्री कुमाराय स्वप्नमुक्त्वा तापसीं सत्कृत्य विससर्ज ।“अवश्यमिदमपि कथंचित् सेत्स्यति ”इति स्वस्थचित्तौ कुमारामात्यौ मुदं भेजतुः। इतश्च सौभाग्यमञ्जरी सौधोपरि चन्द्रशालायां निविष्टाऽऽकाशे मधुरं घर्घरीस्वरं श्रुत्वा यावत्पश्यति। तावच्चन्द्रबिम्बादिवोत्तीर्णं स्वर्णघर्घरीभूषितकण्ठं रक्तचञ्चूचरणलोचनं राजहंसद्वयं गवाक्षे समेत्य सलीलं खेलन्मिथो बभाषे–एकेनोक्तं द्वितीयस्य, “कस्त्वं कुतः किमर्थं समेतः।” सोऽवोचत्–“ अहं ब्रह्मलोके ब्रह्मणो वाहनम्, ब्रह्मणो वदनात्कामदेवः सौभाग्यमञ्जरीपतिर्भावीति श्रुत्वा तं वीक्ष्य तत्पत्नीं द्रष्टुमागतोऽस्मि । परं त्वं कः कस्येति । ” सोऽप्यूचे–“ अहमपि तत्रैव वाग्देवीवाहनम्, वाग्देवीवदना-

न्मत्प्रतिबिम्बं कामदेवो मत्प्रतिबिम्बसौभाग्यमञ्जरीपतिर्भविष्यतीति श्रुत्वा तं वीक्ष्य तत्पत्नीदर्शनार्थमत्रागतोऽस्मि।" इति राजहंसयोर्वचः श्रुत्वा "कः कामदेवः? यद्वा एतावेव पृच्छामि" इति कुमारी यावदचिन्तयत्। श्रीकामदेव इति वदन्तावुत्पतितौ। अथ विषण्णा कन्या चन्द्रलेखां सखीमूचे-"सखि! कथं स युवा ज्ञेयः?" सख्यूचे-"मा विषादीः, वादक्षणे स स्वयमेव प्रादुर्भविष्यति" इति कन्या स्वास्थ्यं भेजे। इतश्च कामदेवः प्रतिप्रयाणं सभानिविष्टो विद्वद्गोष्ठीक्षणे पार्श्वद्वयस्थपण्डितयोर्मिथः कथां कुर्वतोरन्तरा स्मितास्यः शिरोधूननेनैव स्वं गोपायन् क्रमाद्वाणारसीं प्राप्तः।

श्रीवैरिसिंहेन राज्ञा सर्वेऽपि स्वयंवराहूता राजानो महोत्सवपुरःसरं यथोचितस्थाने स्थापिताः, विशेषतः कामदेवश्च। अथ प्रवेशोत्सवक्षणे वीक्षणार्थागतदासीमुखाद् भूपालागमनं श्रुत्वा तत्परीक्षार्थं कुमार्या प्रेषिता चन्द्रलेखा सखी। सा च पत्रपुष्पचन्दनादिपूर्णपटलीपाणिदासीशतपरिवृता निशामुखे भोगार्पणव्याजेन सर्वभूपानां चरित्राणि निरीक्ष्यार्द्धरात्रे समेत्य कन्याग्रे प्रोवाच-"स्वामिनि! किमुच्यते, रत्नदीपी चतुर्मुखः। यतः कोऽपि कोपेन, कोऽपि कार्पण्येन, कोऽप्यसत्येन, कोऽप्यनौचित्येन, कोऽप्यहंकारेण, कोऽपि विकारेण, एवं प्रभूतभूपान् दोषविरूपान् वयं पश्यन्त्यः कामदेवस्यावासे सिंहद्वार एव यावत्पश्यामस्तावत्सभान्तर्निविष्टोऽनुच्छिष्टरूपलावण्याङ्गभङ्गसौभाग्यादिगुणाश्लिष्टः कुमारो दृष्टः। चिन्तितं च-"राजहंसाभ्यां योऽस्मत्स्वामिनीपतिः प्रोक्तः सोऽयं कामदेवः। परं प्रेक्ष्यते क्षणमस्य मुखम्।" तावता विद्वद्गोष्ठीक्षणे प्रवर्तमाने सस्मितं

शिरोधूननमेव कुर्वाणं कुमारं दृष्ट्वा निर्णीतमस्माभिः–"नूनं युक्तायुक्तस्थाने शिरोधूननं ज्ञापयति यदेष
किञ्चिन्न वेत्ति"इति । ततः स्वामिनि! सोऽन्यः कामदेवः,यो राजहंसाभ्यां प्रोक्तः। एतच्च श्रुत्वा कन्या"य-
द्भाव्यं तद्भविष्यति"इति जल्पन्ती दीर्घं निःश्वस्य सहसा शय्यायां लुलोठ ।"चन्द्रलेखापि श्रान्ता तत्राशेत ।
अथ कन्या–"हा ! प्रातः स्वयंवरे किं भावि? मृत्युरेवाथ श्रेयान्"इति ध्यात्वा कण्ठे पाशक्षेपाय यावदुत्तिष्ठ-
ति,तावत्"मा विषीद,त्वत्पतिरेवासौ,यो ब्रह्मवाग्देवीभ्यामुक्तः" इति वारत्रयं यक्षप्रोक्तामाकाशवाणीमाक-
र्ण्य 'कल्पान्तेऽप्याकाशवाणी नान्यथा स्यात्'इति सहर्षं सुखं सुष्वाप । इतश्च"प्रातः स्वयंवरमुहूर्तोऽस्ति, सत्वरं
यथोपदिष्टकर्माणि कुरुध्वम्।"इति पाटहिकेन पटहं वादयित्वोद्घुष्टे स्वयंवरमण्डपे च सज्जीकृते सर्वेऽप्याहूता
राजानः प्रातःस्नातानुलिप्तभूषिताननाः यानाधिरूढा महत्या छत्रचामरादिऋद्ध्या राजमानाः "को भव्यः ?
कोऽभव्यः?" इत्याकुलैर्लोकैरालोक्यमाना अनेकवादित्रनादैर्दिग्मण्डलान्यापूरयमाणाः स्वयंवरमण्डपं प्रविश्य
मञ्चस्थापितसिंहासनानि यथाक्रममलंचक्रुः। राजकन्यापि राजादेशात्पूर्वं स्नाता ततो विलेपनपुष्पाद्यलंकृता
कृतार्हत्पूजना जनानुरागसागरविहितमज्जना स्त्रीसहस्रपरिजनाध्यारूढयाप्ययाना सखीभिर्गीयमाना पा-
णिस्थितवरमालाशोभमाना स्वयंवरमण्डपं विवेश । तदा च तत्रोपविष्टा भूपा भूपपुत्राश्च दर्पणदर्शन–भाल-
स्पर्शन–क्षुरिकानर्तन–केतकीपत्रकर्त्तनादिनानाचेष्टाः कुर्वन्ति स्म ।
अथ प्राह प्रतीहारी–"पश्य प्रीतिस्पृशा दृशा । त्वत्सौभाग्यगुणाकृष्टाः समेताः सखि ! भूभुजः ॥१॥

असौ पूर्वदिशः स्वामी चामीकरवरद्युतिः । राजा गुणाकरः सर्वकलानामेकमास्पदम् ॥ २ ॥
दक्षिणाशापतिः पृथ्वीचन्द्रः सैव नरेश्वरः । पश्चिमायां महीसेनः सिन्धुदेशप्रभुस्त्वसौ ॥ ३ ॥
असावयोध्याधीशः श्री सूरदेवनृपाङ्गजः । कामदेवः कामदेवतुल्यरूपो विराजते ॥ ४ ॥
अङ्गवङ्गकलिङ्गश्रीतिलङ्गमगधाधिपाः । वत्से कियन्तः शक्यन्तेऽधुना कीर्त्तयितुं नृपाः ॥ ५ ॥
सर्वेऽप्यमी गुणशतैः कलिताः कुलीनाः, प्रौढप्रतापदहनज्वलितारिमीनाः ।
एषां सुधीर्जयति यो भवतीं स भूयाद्, भर्त्ता तवेति कुरु संप्रति पूर्वपक्षम् ॥ ६ ॥
गद्यपद्यैरथो कन्या पूर्वपक्षं तथाकरोत् । आस्तां यथोत्तरं भूपास्तदर्थमपि नाविदन् ॥ ७ ॥
ततो निरुत्तरीभूते राजवर्गेऽखिला जनाः । हाहाकारपराः प्रोचुः पुंस्पक्षो विजितः स्त्रिया ॥ ८ ॥
वीक्ष्योदन्तममुं दध्यौ वैरिसिंहनृपस्तदा । कुमार्येवासकौ यावज्जीवं स्थाप्या कथं हहा ॥ ९ ॥
पक्षावेशादथामात्यविज्ञप्तः सूरदेवसूः । गर्जन्पर्जन्यवत्प्रोचे कन्यां सौभाग्यमञ्जरीम् ॥ १० ॥
अवधारय मद्वचः शुभे ! न वयं किंचिदधीतिनः श्रुते । तव पुण्यवशात् प्रदद्महेऽखिलपृच्छोत्तरमुत्तरं परम् ॥
प्राग्जन्मान्तरमपि प्रियं प्रेक्ष्य मुदं दधौ । राजकन्या चकोरीव जीमूतान्तरितं विधुम् ॥ १२ ॥
प्राग्जन्मपत्नीं प्रेक्ष्याथ कामदेवः प्रमोदतः । स्वपद्महस्तं स्तम्भस्थपाञ्चालीमस्तके ददौ ॥ १३ ॥
ततः प्रोवाच पाञ्चाली कोकिलामञ्जुलं स्वरम् । वत्से ! पृच्छात्रयस्यास्य ददस्वोत्तरमद्य मे ॥ १४ ॥

आदौ दिनं वा रात्रिर्वा बीजं वाथ तदङ्कुरः । कर्मोपक्रमयोर्मध्ये बलीयान् घटतेऽथ कः ॥ १५ ॥
सौभाग्यमञ्जरी पृच्छाद्वयोत्तरमजानती । तदा तृतीयपृच्छाया दातुमुत्तरमित्यवक् ॥ १६ ॥
कर्मैव कारणं विद्धि सत्त्वानां सुखदुःखयोः । उपक्रमादतः कर्म बलीय इति मे मतिः ॥ १७ ॥
पाञ्चाली चावदत् कार्यसिद्धिश्चेत्कर्मणैव ते । वादे विजयहेतोस्त्वं तन्मा कार्षीरुपक्रमम् ॥ १८ ॥
अथो निरुत्तरा कन्या प्राह पाञ्चालिकां प्रति । साऽहं विजिता किन्तु त्वमप्युत्तरमर्पय ॥ १९ ॥

ततः समस्याप्रहेलिकाक्रियागुप्तकादिविनोदप्रश्नोत्तरेषु पाञ्चालिकया दत्तेषु कुमारी प्रोचे—" पाञ्चालि ! प्रीता तव प्रश्नोत्तरैः, परं यन्मया महीपतयः पृष्टास्तस्योत्तरं जल्प इति ।"

मुक्तिदायकदेवाद्याः के स्युस्तत्त्वत्रयी च का । नृपैर्युक्तं तदस्माकमुत्तरं दीयते कथम् ॥ १ ॥

प्राह पाञ्चालिका राजपुत्रि ! सम्यग् निशम्यताम् । त्वदुक्तं नो नृपैर्युक्तं तदस्युत्तरयते कथम् ॥

तच्चेदम्—इह किल सकलकलाकलापकुशला अपि तत्त्वत्रयीस्वरूपं सम्यगविन्दमाना नानावेषाभो मोक्षहेतवे हरिहरादीन् देवान् ब्राह्मणादीन् गुरून् यागादिक्रियाश्च धर्मं प्रमाणयन्ति । ते पुनरेवं वाच्याः— " ननु हरिर्मुक्तिदातेति यदुच्यते? तत्र स हरिः सरागो वा नीरागो वा? सराग इति चेत् ? न, सरागस्यासुकस्य मुक्तिदानसामर्थ्यात् अस्मदादिवत्, नीरागश्चेत् तर्हि वीतराग एव नामान्तरेण प्रपन्नः, एवमन्यदेवेष्वपि" तथा "ब्राह्मणास्तारयन्ति" इत्यत्रापि स ब्राह्मणो वेषेण वा क्रियया वा ? वेषेण चेत्? न, नटादेरपि प्राप्तत्वात् । क्रियया चेत्? तर्हि सा क्रिया हिंसामृषास्तेयशीलादिरूपाऽन्यरूपा वा ? अन्य-

रूपाश्चेत् ? न ।

सत्यं ब्रह्म, तपो ब्रह्म ब्रह्म चेन्द्रियनिग्रहः । सर्वभूतदया ब्रह्म एतद्ब्राह्मणलक्षणम् ॥ १ ॥

इत्युक्तिप्रामाण्यात् । अहिंसादिरूपक्रियायाश्च ब्राह्मण्यमस्माकमपि संमतमेवेति ।" तथा नोदनालक्षणो धर्म इत्यप्ययुक्तम् । यतो नोदना यागादिक्रियाप्रवर्त्तकवचोरूपा । यागादिक्रियाश्च हिंसात्मिकाः । सा धर्माय चेति प्रोच्यमानं "नीली गेहधवलनाय"इति वत् कस्य नाम न हास्याय । अत एवोक्तम्—

यूपं छित्वा पशून् हत्वा कृत्वा रुधिरकर्दमम् । यद्येवं गम्यते स्वर्गे नरके केन गम्यते ॥ १ ॥

ततोऽहिंसैव धर्मः । एवं सति—

मोक्षदाता वीतरागः क्रियावान् भवतारकः । शर्मदायी दयाधर्म इति तत्त्वत्रयी स्फुटम् ॥ १ ॥

इति पाञ्चालीप्रतिष्ठिततत्त्वत्रयीश्रवणेनारञ्जितापि रञ्जिता राजकन्या कामदेवकण्ठे यावद्वरमालां क्षिपति तावत् सर्वानपि भूपान् कामदेवसरूपरूपान्निरीक्ष्य क्षोभमवाप । ततः "अहो आश्चर्यं हा किं भावि"इत्यादि जल्पति लोके कुमार्या परमेष्ठिमंत्राभिमंत्रिततोयेन यदि "सत्यः श्रीमान् जैनधर्मस्तदा विलीयतां माया " इति तारं श्रावयित्वा वारत्रयं छटा चिक्षेपे । ततो विलीना माया । जाताः स्वभावरूपा भूपाः । हृष्टाः सर्वे लोकाः । बाला कुमारकण्ठे वरमालामक्षिपत् ।

अथो जयजयध्वानपूर्वं धवलमङ्गलैः । गीयमानैर्नृपः पुत्रीयुक् कुमारं गृहेऽनयत ॥ १ ॥

तैरेव स्वजनीभूतैर्भूपैर्भूपः शुभेऽहनि । अचीकरत वीवाहं महेन महता तयोः ॥ २ ॥
ततो व्यसर्जयद्राज्ञा राज्ञः सत्कारपूर्वकम् । वरवध्वोः प्रवृत्ते दशाहं मङ्गलादिकम् ॥ ३ ॥
मा ज्ञासीत्कोऽपि मूर्खत्वमिति शीघ्रं शुभक्षणे । सपत्नीकः कुमारोऽथ चचाल स्वपुरं प्रति ॥ ४ ॥
निवृत्ते च सुरे राज्ञि प्रयाणत्रितयादनु । नद्यास्तीरेऽम्बरे ग्रामे कुमारोऽस्थात्ससैन्यकः ॥६॥

इतश्च सा तापसी सौभाग्यमञ्जरी मूर्खपतिसंकटे पातिता, अथ परपुरुषापहारसंकटे तां पातया-
मि,इति ध्यात्वा कान्तीपुरीपतेस्तिलङ्गादिदशदेशाधिपतिमहाकालादिदशनरेशसेव्यपादस्य स्वयंवरात्कान्तीं
गच्छतः कालभूपालस्येति ज्ञापयामास--" कामदेवो बाल्यादपि महामूर्खः, कयाचिन्मायथैवानेन सौभाग्य-
मञ्जरी जिता न तु विद्वत्तया । अत्रार्थे सभासमक्षं वादं याचध्वम्, यद्यसौ भापितो वक्तुमपि वेत्ति त-
दाऽहं यथारुचि विडम्बनीया । परमीदृशं कन्यारत्नमस्थाने गच्छन्नैवोपेक्ष्यते । " एतच्च श्रुत्वा कोऽयं वराकः
संग्रामे वादे वाऽस्माकं पुरतः कामदेवः ? इति गर्जन्तो दधाविरे कालादयः । तापसी च स्वकृतकूटज्ञापनेन
दुःखयामि सौभाग्यमञ्जरीम्,इत्यम्बरग्रामे समेता । तत्र च नदीतटे खेलन्तीं चन्द्रलेखां वीक्ष्य " दृष्टं मद्-
वज्ञाफलं भवत्स्वामिन्या, महामूढभर्तृसंकटे पातिताऽस्ति सा, पुनरद्य संकटान्तरे तां पातयिष्यामि,इति
यभाषे । " चन्द्रलेखा शीघ्रमागत्य सौभाग्यमञ्जरीं प्रति तदूचे । सौभाग्यमञ्जरी प्राह-" सखि ! अग्रेऽप्येषा-
ऽऽशंकाऽभूत्, परं ज्ञातं यदि पुनर्लज्जया पतिः समयेऽपि किञ्चिन्न वक्ति । ततस्तापसीमेवाकार्य पृच्छ्यते । य-

इति तापसीमाकार्य तन्मुखेनैव सर्वं मूलतः श्रुत्वा राजपुत्री विषण्णेत्यचिन्तयत्–
था सर्वं ज्ञायते । " इति तापसीमाकार्य तन्मुखेनैव सर्वं मूलतः श्रुत्वा राजपुत्री विषण्णेत्यचिन्तयत्–

समर्थेनापि सन्ताप्योऽसमर्थोऽपि हि न क्वचित् । भूपतिर्व्याकुलीचक्रे दुर्बलैरपि मूषकैः ॥ १ ॥

केनचिद्राज्ञा वस्त्रपेटापार्श्वे भ्राम्यन् मूषकः कम्बया ताड्यमानो नष्टोऽन्यमूषकैः सह कोपात्कोशस्थाः सर्वचर्मरज्जूर्भक्षयित्वा प्रथमवृष्टौ गजबन्धरज्जूरप्यभक्षयत् । ततो मुत्कलाङ्गानां वृष्टिसिक्तपृथ्वीगन्धमदोन्मत्तानां प्रतोल्यादि पातयतां हस्तिनां बन्धरज्जुर्मूषकभक्षिताः श्रुत्वा कथं करिष्यते, इत्याकुलीभूतो भूपो मूषकैः प्रोचे–" समर्थेनापीत्यादि ।" अथो क्षमयाम्येताम्,इति तापसीं बाहौ धृत्वा विनयवाचा क्षमयित्वा"यक्षमाराध्य यावज्जीवं मत्पतेर्मूर्खतादोषमपनय,इत्यवोचत् । तापसी स्माह–"एवं विधास्ये,परं कालादयो दशभूपाला मत्प्रेरिता भवदपहारायायान्तः सन्ति,इति ते केनाप्युपायेन तावत्प्रतीक्षयितव्याः" इति शिक्षां दत्त्वा साऽचालीत् ।

विमलबोधश्च तदैव चन्द्रलेखामुखात्तत्स्वरूपं ज्ञात्वा स्वं सैन्यं चतुर्विभागीकृत्य शिक्षां दत्त्वा चतुर्दिक्षु प्रेष्य स्वयं सारसैन्ययुक्तः कुमारान्तोऽस्थात् । यावता कालः कालवन्नि स्वानध्वानैर्दिशः पूरयंस्तत्रागतः, तावता चतसृषु दिक्षु चमूचतुष्टयी समुद्रचतुष्कवद्गजगर्जित–हयहेषित– रथचक्रचीत्कार–पत्तिपूरहक्का-ढक्कानादैर्ब्रह्माण्डमण्डपं स्फोटयन्ती प्रादुर्भूता । तां च दृष्ट्वा किमेतत् ? इति क्षोभं प्राप्ते कालसैन्ये विमलबोधेन प्रेषितो भट्टः संमुखं गत्वा दक्षिणं करमूर्ध्वीकृत्य तारं बभाषे–" भो भो वीराः । किं मुधा वैरं क्रियते ?

भूपाला। केवलिनं त्रिःप्रदक्षिणीकृत्य भक्त्या नत्वा पुरः समुपाविशन् । केवली धर्मदेशनां चक्रे--

अयमुपचितकर्मव्याधिविध्वंसवैद्यः, सकलसुरनरश्रीलाभकल्पद्रुमोऽयम् ।
अयमपि च समस्तक्लेशनिर्मुक्तमुक्तिं, दिशति विशदभावाराधितः शुद्धधर्मः ॥ १ ॥

तत्राष्टानामपि कर्मणां स्वरूपबन्धादिहेतूंश्चोपादिशत्, तद्यथा–

" पटप्रतीहारखड्गमद्यं हडिश्च चित्रकृत् । कुलालकोशाधिक्षौ च कर्माष्टकनिदर्शनम् ॥१॥

तत्र ज्ञानस्यावारकत्वाज्ज्ञानावरणीयम्, चक्षुषः पटवत् । चक्षुरचक्षुदर्शनादीनामावारकत्वाद्दर्शनावरणीयम् , द्रष्टुकामस्यापि राज्ञोऽनभिप्रेतलोकस्खलनकृत्प्रतीहारवत् । विद्येते सुखं दुःखं वा येन तद्वेदनीयम् , जिह्वया लिह्यमानमधुलिप्ततीक्ष्णखड्गधारावत् । मुह्यते जीवो येन तन्मोहनीयम्, मद्यवत् , तच्च द्वेधा, दर्शनमोहनीय-चारित्रमोहनीयभेदात्, आद्यं सम्यक्त्वलाभान्तरायकृत्, द्वितीयं चारित्रलाभान्तरायकृत । एति याति चतुर्गतिसत्कदेहस्थजीवस्य धारकतामित्यायुः, चौरादिपादस्य हडिवत् । नामयति जीवं शुभाशुभगत्यादिभेदेष्विति नाम, शुभाशुभरूपकृच्चित्रकारवत् । गुङ्शब्दे गूयते उच्चैर्नीचैर्भावेन जीवो यस्मात्तद्गोत्रम्, शुभाशुभत्वशब्द्यमानपात्रकृत्कुंभकारवत् । दानादि कुर्वतो जीवस्यान्तरायतां यातीत्यन्तरायम् , तद्दानादि कुर्वतो राज्ञो निषेधकभाण्डारिकवत् । " इति सर्वकर्मस्वरूपमुक्त्वा कुमारेण ज्ञानावरणीयस्य बन्धहेतौ पृष्टे पुनः केवली प्राह---

मारः पादयोर्लगित्वा पूर्वपापान्यालोच्य केवलिप्रोक्तप्रायश्चित्तेन स्वं विशोध्य क्रमेणोत्तमार्थमाराधयामास ।"

पञ्चमो हेतुर्महाशातना । सा च काल–विनय-बहुमानोपधाननिह्नव-व्यञ्जनभेदार्थभेदोभयभेदप्रकारैरष्टधा ।

तत्र कालाशातनायां सोमकुमारदृष्टान्तः–

पूर्वं श्रीजिनदाससूरीणां शिष्यो धर्मदासगणिः, कदाचित्कालवेलायामपि सिद्धान्तं वाचयन् केनापि निषिद्धः 'कालवेलायां पठितं किमपठितं स्यात् ? मुधासौ पाठान्तरायः' इति बुद्धया तथैव वाचयन् ज्ञानावरणीयं कर्म बद्ध्वाऽनालोचितोऽप्रतिक्रान्तः कालं कृत्वा सौधर्मदेवलोकं गत्वा च्युत्वा च चन्द्रनरेन्द्रपुत्रः सोमकुमारोऽजनि । स च 'ताडयित्वा पाठ्योऽसौ प्रत्यहम्, इति राजादेशादेव पण्डितेन सर्वाः कलाः शिक्षितः ।'सोमकुमारसदृशः कोऽपि न कलावान्'इति वसुधापीठे ख्यातिं प्राप्तः । इतश्च कान्तीपतिश्रीषेणराजसुता सकलकलाकुशला सर्वोत्तमरूपा सुरूपाभिधाना 'स्वेच्छया वरं वृणीष्व'इति कलातिशयसन्तुष्टतातदत्तादेशान्महत्या सेनादिसामग्र्या प्रतिदेशं राजकुमारान् परीक्ष्यमाणा सोमकुमारं सर्वगुणाधारं श्रुत्वा चम्पां समेता सा । तच्च ज्ञात्वा चन्द्रेण राज्ञैकान्ते पण्डितः पृष्टः–'अस्ति सर्वकलासु परीक्षाक्षमः कुमारः?'पण्डितः प्राह-'न वेत्ति तन्न हि त्रैलोक्ये' राज्ञोक्तम्-'सत्यमिदम्?।' पण्डितेनोक्तम्–'देव! किं कथ्यते कुमारस्य? सा कला नास्ति, यामसौ न जानाति । वाचस्पतिमपि वादे जयति । साक्षात्पुंरूपा सरस्वती । अनेकशो वारान् परीक्षितोऽस्ति।'अथ हृष्टेन राज्ञाऽमात्यैः कारितः कुमार्याः प्रवेशोत्सवादिस-

त्कारः । निर्मापितः परीक्षामण्डपः । गृहीतं शुभं मुहूर्तम् । आहूता विख्याता भूपालाः । मिलिता अस्तोका लोकाः ।अथ परीक्षादिने राज्ञा मण्डपे निविश्य सर्वभूभुजः सभ्यांश्च मञ्चेषु निवेश्य सपण्डितं सोमकुमारमालोकार्थं सगौरवमानीता तत्र कुमारी।ततो राजादेशान्निवृत्ते कलकले'कन्या परीक्षां करिष्यति'इति साश्चर्ये सर्वलोके कुमारस्य रूपलावण्यादिगुणान् दृष्ट्वा कलाकौशल्यपरीक्षां कर्तुकामा सरस्वतीवास्खलितगद्यपद्यलहरीभिर्भूभृतोऽपि प्लावयन्ती क्षणमात्रं सर्वविद्यासु हृद्याभ्यासं दर्शयित्वा 'दर्शयतु निजं नैपुण्यं कुमारः, प्रीणयतु सभ्यमनांसि' इति गदित्वा यावदस्थात्कुमारी । तावत्पूर्वकृतकर्मोदयात्सोमकुमारस्य गलिता मतिः, स्खलिता जिह्वा, विस्मृतानि शास्त्राणि, विकृतानि सर्वेन्द्रियाणीत्यधोमुखो जातः । तदा च किमद्यापि न वक्ति कुमारः, इति साशंके सर्वलोके राजप्रेरितपण्डितोऽवादीत्–" वत्स ! वेत्सि सर्वशास्त्राणि, ततस्त्यज त्रपाम्, कुरु कृपाम्, पूरय मनोरथम्, जल्पानल्पविचाररहस्यम्, विधेहि विश्वं वश्यम्, धवलय निजं कुलम्, प्रीणय कन्यामनो विमलम्, । " एवं पुनः पुनः पण्डितेनोक्तेऽपि यदा न वक्ति किञ्चित्कुमारः । तदा रे पाप ! 'त्वयैव बोलितास्तवचोविश्वासेनैव सर्वमिदमारब्धम् । हा ! कथं विगोपिताः स्मः' इति कोपाद्भूपेन पण्डितो बन्धयित्वा वधार्थं बहिः प्रहितः । तावत्तत्र समवसृतः केवली । तत्प्रभावाच्च प्रहारेष्वलगत्सु लोकमुखात्तत् श्रुत्वा राजा सपरिवारः कुमारमग्रेकृत्य पण्डितेन सह तत्रागत्य केवलिनं नत्वा कुमारोदन्तं पप्रच्छ । केवली च पूर्वभवं श्रावयित्वा इत्यवोचत्–" यः कालवेलायामस्वाध्याये ईर्यापथीप्रतिक्रमणाद्यविधिना चागममधी·

ते तस्य प्राज्ञस्याप्यवसरे कला नैव स्फुरति।" इत्याकर्ण्य कुमारो जातपश्चात्तापः साधुं नत्वाऽऽत्मानमित्थं नि-
निन्द-" हा हा ऽज्ञानिना मया चिन्तामणिः कर्करतया, स्वर्भाणुतया नभोमणिः, करीरतया कल्पवृक्षः, कृ-
पणपक्षतया श्वेतपक्षः, कोलतया महागजः, सर्पतया महाध्वजः, काकतया हंसः, शिरोबन्धनतयाऽवतंसः,
कालकूटतयाऽमृतम्, तैलतया गोघृतम्, काञ्जिकतया दुग्धम्, रूक्षतया स्निग्धम्, किङ्करतया नरेशः, कुट्या-
न्यतया सर्वज्ञोपदेशश्चित्ते चिन्तितः।" तेनैवं विगुप्तोऽस्मि। ततो भगवन्! दीक्षां दत्त्वा मामस्मात्पापान्मोचये-
ति। तदा च कुमारी तानि तद्वचांस्याकर्ण्याहो सम्यक्त्वलाभकौशल्यं विना कथमीदृशोक्तिः स्फुरति। न-
न्नूनमेष महाविद्वानपि कर्मोदयादेव तदा किञ्चिन्नोवाच। अतोऽत्र भवेऽसावेव मत्पतिरिति निश्चित्य केवलि-
नमप्राक्षीत्-" अस्ति मे भगवन्! दीक्षा न वा इति।" केवल्यवोचत्-" अस्ति युवयोर्भोगफलकर्मोदयाद-
नु दीक्षा!" ततः केवलिदत्तप्रायश्चित्तेनात्मानं विशोध्य कुमारः कुमारीं परिणीय चिरं भोगान् भुक्त्वा स-
भार्यो दीक्षामादाय प्रान्तेऽनशनात्सर्वार्थसिद्धिमवाप ॥१॥"

विनयाशातनायां भाविनः श्रेणिकराजस्य कथा—

किल भाविनोऽपश्चिमश्रीवीरजिनस्य वारके राजगृहे श्रेणिको राजा भावी। स च सिंहासने निवे-
श्य मातङ्गमग्रे ऊर्ध्वं संस्थाप्य खड्गमाकृष्याकृष्टिविद्यां पृच्छति। मातङ्गश्च भीतो वक्ष्यति परं राज्ञो न स्फुर-
ति। ततो "देव! विनयं विना विद्या न स्फुरति" इत्यभयकुमारमन्त्रिवचसा महीशो मातङ्गमासने स्वकीये

निवेश्य स्वयमग्रे योजिताञ्जलिर्विद्यामादास्यति, ततः स्फुरिष्यति । इत्येवं सर्वशास्त्राणि विनयेनैव सफलानि स्युः ॥ २ ॥

बहुमानं मानसी भक्तिः । तस्यां छात्रद्वयकथा—

एकस्य पण्डितस्य द्वौ छात्रौ । धन्यो धर्मश्च । धर्मः शास्त्रोपरि बहुमानं विनयं विधत्ते । धन्यस्तु न तथा । अन्यदा पण्डितेन निमित्तमध्याप्य परिक्षार्थं प्रेषितौ छात्रौ । राजमार्गे प्रौढपदानि वीक्ष्य धन्योऽवादीत्—" इमानि हस्तिनः पदानि । " धर्मेणोक्तं विचार्य—" हस्तिन्याः पदानि, सा च वामाक्षिकाणा, तस्यां चासन्नपुत्रप्रसवा राज्ञी चटिताऽस्ति।" एवं वार्त्तयन्तौ पुराद् बहिर्गतौ । तादृशीमेव हस्तिनीं वीक्ष्य जवनिकान्तरितायाः राज्याः पुत्रप्रसवं च श्रुत्वा पुनश्चलितौ क्वापि ग्रामे सरस्तीरे निविष्टौ एकया वृद्धया पृष्टौ—" मम पुत्रो देशान्तरं गतः कदैष्यतीति । " तावता कयाचिन्नारी तोयेन भृत्वा शीर्षे रोप्यमाणो घटः पतित्वा भग्नस्ताभ्यां दृष्टः । धन्येनोक्तम्–"भद्रे विनष्टो हि तव पुत्रः ।" तदा धर्मेणोक्तम्–"मातः ! शीघ्रं गृहं व्रज, समेतस्ते पुत्रः । " स्थविरा गृहं गता पुत्रं समेतं वीक्ष्य हृष्टाऽक्षतपात्र–कुंकुम–कुसुम–पुगीफलादिकमादाय सरस्यागत्य धर्मं वर्धापयामास । ततो द्वावपि गतौ गुरुपार्श्वे प्रोचतुः स्वं स्वं ज्ञानम् । गुरुणा कथमिति पृष्टे धन्योऽभणत्–" प्रौढपदानि दृष्ट्वा हस्तिनः पदानि,घटो भग्नो जलं गतं तथा देहो भग्नो जीवो गतो मयेत्युक्तम् ।" धर्मेणोक्तम्–निरोधानुमानेन हस्तिनीम्, पथि वामदिग्वर्त्तिवृक्षपत्रादिरा-

कृष्टमिति चामाक्षिकाणा, तस्यां च राजा वा राज्ञी वाऽन्यः, परं कौसंभतंतवो धृत्तिकण्टकेषु दृष्टा इति
राज्ञी, तस्याश्च वटस्याधो विश्रम्य हस्ताभ्यां भुवमाक्रम्योत्तिष्ठन्त्या दक्षिणपाणेर्निमग्नतमं प्रतिबिम्बं दृष्ट्वा
प्रत्यासन्नपुत्रप्रसवा। तथा या घटमृत्तिका भूमितः पृथग् गता सा तस्या मिलिता, यच्च जलं सरोजलात्पृथक्कृतं
तदपि तस्य मिलितम्, ततो नूनं वृद्धायाः पुत्रः पृथग्भूतोऽस्या मिलत्येव। " इति द्वयोरपि बुद्धिं श्रुत्वा गुरु-
णोक्तं-"वत्सौ यः सबहुमानं गुरुं सेवते तस्य सम्यग्धीः स्फुरति, नान्यस्यैवेति बहुमानाद् गुरुः सेव्यः ॥१॥

यद्विधा श्रुतं प्रत्ययबहुमाने बहुमाने वा शकटपितोदाहरणम्—

गङ्गाकूलवासिनौ द्वौ बन्धू एकत्र गच्छे प्रव्रजितौ। तत्रैको बहुश्रुतत्वादाचार्यो जातः। सर्वं दिनं शि-
ष्यैः शास्त्रार्थं सेव्यमानो विश्रामं कदापि नाप्नोति। रात्रावपि सूत्रार्थचिन्तनव्याख्यादिभिः सुखनिद्रां न ल-
भते। अन्यदा स सूरिर्मध्येऽपवरके मूर्खं सुखोपविष्टं निजं बन्धुं दृष्ट्वाऽचिन्तयत्-"अहो? धन्यो मे भ्राता
मूर्खत्वात् केनापि नो सेव्यते। अहं पुनरजाखड्गतुल्येन ज्ञानेन क्लेशं प्राप्तः सदा। तदुक्तं केनापि यतः—
मूर्खत्वं हि सखे? ममापि रुचितं यस्मिन्निमेऽष्टौ गुणा। निश्चिन्तो बहुभोजनोऽत्रपमना नक्तंदिवा शायकः।
कार्याकार्यविचारणान्धबधिरो मानापमाने समः, प्रायेणामयवर्जितो दृढवपुर्मूर्खः सुखं जीवति ॥१॥"
नैवं भावितवान् यतः—
नानाशास्त्रसुभाषितामृतरसैः श्रोत्रोत्सवं कुर्वतां। येषां यान्ति दिनानि पण्डितजनव्यायामखिन्नात्मनाम्।

तेषां जन्म च जीवितं च सफलं तैरेव भूर्भूषिता, शेषैः किं पशुवद्विवेकविकलैर्भूभारभूतैर्नरैः ॥ २ ॥

एवं चासौ ज्ञानाबहुमानाज्ज्ञानावरणीयं कर्म बद्ध्वानालोचिताप्रतिक्रान्तः कृतानशनो मृत्वा देवलोके गत्वाऽमरसौख्यं भुक्त्वा प्रान्ते च्युत्वाऽत्रैव भरते क्वाप्याभीरकुले सुतो जातः। यौवने पितृभ्यां परिणायितस्तस्य सुरूपेति कन्याऽभूत्। अन्यदा स आभीरो यौवनप्राप्तां तां शकटधुरि निवेश्यान्याभीरैः सह घृत विक्रेतुं पुरं प्रति चचाल। मार्गे आभीराणां तामेव पश्यतां शकटान्युत्पथं गतान्यास्फाल्य भग्नानीति। तैस्तयोरशकटाऽशकटपितेति नाम्नी दत्ते। ततोऽशकटपिता काले कन्यां विवाह्य वैराग्यात् क्वापि गच्छे प्रव्रज्य योगोद्वहनपूर्वमुत्तराध्ययनान्तश्चतुर्थमसंख्यमध्ययनं पठितुं लग्नः। परं पूर्वार्जितज्ञानावरणकर्मोदयाद्दाचाम्लद्वयेनाप्येकापि गाथा नागात्। ततो गुरुणाऽनुज्ञाप्यतेऽखेदमित्युक्ते कीदृशोऽस्य योग इति सोऽपृच्छत्। गुरुराह–" यावदिदं नैति तावदाचाम्लानीति।" सोऽप्येतामेव प्रतिज्ञां कृत्वा नित्याचाम्लतपास्तत्पठति, तथापि नायाति। ततः"अहो ? मूर्खोऽयं नित्यमेतदेवाधीते"इति निन्द्यमानो रुष्यति। केऽपीदं कथयन्ति–"अहो ? धन्योऽयं कथं सोद्यमः पठति।" इति स्तूयमानस्तुष्यति, इति ज्ञात्वा गुरुणोक्तः–"वत्स इदमध्ययनं मुक्त्वा ' म रुसि मतूसि ' इत्येवं पठ।" स च तीव्रकर्मोदयात्तस्य स्थाने स्मार्यमाणोऽपि ' मास तुस ' इत्यधीयते। तस्यैवमाचाम्लतपसा द्वादशवर्षातिक्रमेऽशेषं तत्कर्म क्षीणम्। ततः सर्वज्ञानविभागी जातः। अतः श्रुतं बहु मन्तव्यम् ॥ ३ ॥

उपधानं योगतपः। तद्विना सिद्धान्तवाचने आशातनायां सिंहकथा—

कौशाम्ब्यां सिंहो राजा बलीयान्। स कुगुरुसेवया खेटकं कुर्वन्नरण्ये साधुना बोधितः पापभीरुः श्रीदमघोषाचार्यपार्श्वे प्रव्रज्य योगोद्वहनपूर्वं चत्वार्यङ्गानि प्रवाचितवान्। ततो गुरुभिर्विहारे कृते सुकुमारत्वात्षाण्मासिकयोगोद्वहनाभावेऽपि भगवत्याद्यङ्गानि वाचयन् कुष्टी जातो महावेदनां भुङ्क्ते। अथो गुरुभिस्तत्रागत्याविधिवाचनातो मिथ्यादृग्देव्या छलितोऽसाविति ध्यानाज्ज्ञात्वा कायोत्सर्गाकृष्टशासनदेवीबलात् प्रत्यनीकादेवीं शमयित्वा राजर्षिर्निरामयः कृतः। अथ सम्यगालोच्य प्रायश्चित्तेन स्वं विशोध्य सर्वं योगोद्वहनादिना ज्ञानमाराध्य मुक्तिसौख्यभाग् बभूव ॥ ४ ॥

निह्नवो गुरोरपलापः। तत्र विप्रकथा—

कोऽपि ब्राह्मणो दुर्भिक्षभावाद्विदेशं गतो विद्याबलादाकाशस्थया भण्डिकया सह गच्छन्तं नापितं वीक्ष्य तत्सेवया तां विद्यां लब्ध्वा प्रतिष्ठां श्रियं च प्राप्तः। सुभिक्षे स्वं देशं गतो लोकैः पृष्टः—"कस्ते गुरुः" सोऽपि नीचगुरुलज्जया महत्त्ववन्तं गुरुं वदंस्तत्कालं भ्रष्टविद्यो जातो धौतपोतिश्चाकाशात्पतित इति ॥५॥

व्यञ्जनं सिद्धान्ताक्षरम्, तस्य भेदो बिन्दुमात्रादिना परावर्त्तौ न्यूनाधिकता। एवमर्थस्य, तदुभयस्यापि भेदो वाच्य एषः। तत्राशातनायां मित्रचतुष्ककथा—

वसन्तपुरे जितारिराजस्य चतसृणां राज्ञीनां क्रमेण चत्वारः पुत्रा रुद्र–मेघ–धीर–वीरनामानः प्राप्-

जन्मस्नेहान्मिथोचितक्रीडायुक्ताः क्रीडन्ति।परं रुद्रस्य वदतो जिह्वा विलगति। मेघस्यान्यद्वदतोऽन्यदेवायाति। धीरस्य वाणी अस्फुटत्वान्न परैरीप्स्यते। वीरो मूकत्वाद्वक्तुं न शक्नोति। अन्यदा ते चत्वारोऽपि षोडशवर्षा यौवनान्तर्गताः। तदा साधुं ध्यानलीनं वीक्ष्य वितर्कं कुर्वन्तः साधुना पृष्टाः—"भोः ? कुतः समेता भवन्तः।" रुद्रेणोक्तम्—"किं पृच्छयते! ननु नगरादागता वयम्।" मुनिः प्रोचे—"नाहं तत्पृच्छामि। कुतो भवादागता इति पृच्छामि। रुद्रो जल्पति—"भोभोः! पाखण्डिन्! किमेवं वक्रां वाचं वदसि। किं कोऽपि पूर्वभवानपि वेत्ति?।" ऋषिर्बभाषे—"कोऽपि कोऽपि वेत्ति। यदि कौतुकम्, श्रृणुत श्वानभवाद्भवन्तोऽभ्येताः।" इत्याकर्ण्य कोपादुत्कोशान् खड्गानुत्पाद्य रे, रे! असम्बद्धं लपसि। पश्य किं कुर्म इत्याक्रोशन्तो हन्तुं धावितास्तपःप्रभावाच्च स्तम्भीभूता दीनास्या इत्यूचुः—"ऋषे! सत्यमुक्तं कोऽत्र प्रत्ययः।" साधुनोक्तम्—"वीक्षध्वं प्रत्ययम्। पुराऽत्रैव पुरे सम्यग्दृष्टिर्मज्ञाजैनोऽग्निशर्मा विप्रोऽभूत्। तस्य चत्वारः पुत्राः पूर्ण-पद्म-पञ्चानन-भीमाख्या आर्यवेदान् पठित्वा नयतत्त्वादिविचारग्रन्थान् भणिताः विचारज्ञा जाताः परिणीताश्च। अन्यदा पिता पुत्रान् कुटुम्बभारे नियोज्य दीक्षां चादाय तपसाऽवधिज्ञानी जज्ञे। तत्पुत्रास्तु यदा विद्वद्गोष्ठीं कुर्वन्ति तदा प्रज्ञामदेन पूर्णः सूत्रभेदं कुरुते—'यथा धम्मो मंगलमुक्किट्ठमिति पुण्णं कल्लाणमुक्कोसम्।' पद्मश्चार्थभेदं विधत्ते यथा—'धम्मो मंगलमुक्कट्ठं धर्मो धातुरर्थात् सुवर्णमुत्कृष्टं मङ्गलं सर्वार्थसाधकत्वात्।' पञ्चाननश्चोभयभेदं करोति यथा—'धर्मो मङ्गलमुत्कृष्ट धर्मो धातुर्मङ्गलग्रहवन्मयाधिकारात् क्रौर्यल-

त्युना सर्वार्थसिद्धिं गत्वात्रैव भरते श्रावस्त्यां सुग्रीवराजस्य वैमात्रेयाः पुत्रा जज्ञिरे हंसः कंसः कामः कुंभश्च । कालेऽचिरात्सकलकलाः कलयित्वा वयःस्थाः सुखक्रीडां क्रीडन्तो वर्त्तन्ते । इतश्च कोशलायां प्रतापराजचतसृणां राज्ञीनां चतस्रः कन्याः सोमश्री-सत्यश्री-धनश्री-गुणश्रीनामानो वर्त्तन्ते । ताश्चान्यदा प्रीत्या खेलन्त्यः स्वं स्वं मनोरथं क्रमात्प्रकाश्यैवं प्रतिज्ञामकार्षुः-" यो यामेन श्लोकसहस्रपाठं दत्ते स मे भर्त्ता १, यो यामेन श्लोकसहस्रं नव्यं करोति स मामुद्वहति ३, एकवारं श्लोकसहस्रं श्रुतं धारयति स मे पतिः २, एकैकस्य श्लोकस्य यः सहस्रमर्थं वक्ति स मे वोढा ४।" इत्येतत्तासां वाचः श्रुत्वा पिता स्वयंवरोत्सवार्थं राज्ञो राजकुमारांश्चाकारयत् । तदा च सुग्रीवोऽपि सपुत्रस्तत्रागात् । अथ स्वयंवरमण्डपे निविष्टे राजलोके समागता नरविमानारूढाश्चतस्रोऽपि कुमार्यः प्रतिहार्या राजवर्णने कृते निजनिजप्रतिज्ञां प्रकटयामासुः । ततस्तत्प्रतिज्ञापूरणेऽशक्तत्वात्तूष्णींस्थिते सर्वराजवर्गे सुग्रीवराजादेशाच्चतुर्भिरपि कुमारैः क्रमात् पूरितास्तासां प्रतिज्ञाः । क्षिप्ता बालाभिस्तेषां कण्ठे वरमाला । जातो जयजयारवः । तदा च तद्गुणरञ्जितचेतोभिर्भूपैस्तेषां प्रत्येकं प्रत्येकं दत्ता द्वात्रिंशद् द्वात्रिंशत्कन्यकाः । निष्पन्नो विवाहोत्सवः । सर्वेऽपि सम्मानिता राजानः स्वं स्वं स्थानं ययुः । अतीते दशाहोत्सवे सवधूकैः कुमारैः सह सुग्रीवो राजा स्वपुरीं गत्वा राज्यमपालयत् । कुमाराश्चत्वारोऽपि महाप्राज्ञतया ख्यातिं प्राप्ताः । अतो दूरदेशवासिनोऽनेके राजानो राजकुमाराश्च महापण्डितयुक्ताः सर्वशास्त्रसन्देहापनोदार्थं तत्रागत्य राजसभास्थितांस्तान्समुपासन्ते । एवं पितुः

क्ष्मा उत्कृष्टः।' भीमः सिद्धान्तार्थं विपरीतं व्याख्याय धर्मस्यावर्णवादं करोति यथा–'धर्मं उत्कृष्टमङ्गलं शान्तरसत्वेनाकिञ्चित्करत्वात्। ततः पापं मङ्गलमुत्कृष्टं हिंसाऽसत्यचौर्यादितद्भेदानां सर्वकार्यंकरत्वात्।' एवं ते तीव्रं ज्ञानावरणीयं कर्म बध्नन्ति स्म। तथालाभादुन्मार्गदेशनेन सन्मार्गनाशनेन च तिर्यग्गतिमर्जयन्ति स्म। अन्यदा ग्रीष्मे मध्याह्ने प्रदीपने तीव्रे लग्ने सारभाण्डाकर्षणाय गृहान्तःप्रविष्टा आर्त्तध्यानेन विनष्टास्तत्रैव पुरे मातङ्गपाटके श्वाना जाताः। ते च जनं प्रति धावन्तः कदाचिन्मां पूर्वजन्मपितरं पथ्यागच्छन्तं दृष्ट्वा तारस्वरं भाषन्तो धाविताः, सनामग्राहं च मया नामतो वादिताः, मामवलोकयन्तो जातिस्मरणं प्रापुः। अथ च स्मृतनिजपापाज्जातपश्चात्तापाः साधितानशना. राजपाटिकां गच्छता राज्ञा पूज्यमाना राजधान्यामेव मृता राजपुत्रा भवन्तोऽवतीर्णाः। अहं तु संसारसम्बन्धे भवत्पिताऽग्निशर्मा।" इति यतिवाचं कुमारपरिवारमुखाच्छ्रुत्वा राजा तत्रायया। तदा कौतुकान्मिलितेन लोकेन मुनिरुपलक्षितो वन्दितश्च। राज्ञाऽथ किमेतदिति पृष्टे साधुनोचे–"भवत्पुत्राः सर्वे ते प्राग्भवनिजावासकुटुम्बादि वीक्ष्य प्रत्ययमुत्पादयिष्यन्ति।" ततो राज्ञा लोकादग्निशर्मगृहं ज्ञात्वा पुत्रास्तत्रानीताः पूर्वानुभूतस्वकुटुम्बादि निरीक्ष्य जातिं स्मृत्वा "हा! कथं हारितो मानुषो भवः। अथ प्रव्रज्य पापाच्छुटामः" इति वैराग्यात्पितरौ महाग्रहेण परीप्सित्वा मुनिना सह श्रीगुणाकरसूरिपार्श्वे गत्वा दीक्षां जगृहुः। ततो ज्ञानस्य कालाधष्टाशातनात्यागेन सर्वं गर्वं मुक्त्वा ज्ञानिनां भक्तपानानयनविश्रामणादिभक्त्या च बहु ज्ञानावरणीयं कर्म क्षपयित्वा पण्डितमृ-

त्युना सर्वार्थसिद्धिं गत्वात्रैव भरते श्रावस्त्यां सुग्रीवराजस्य वैमात्रेयाः पुत्रा जज्ञिरे हंसः कंसः कामः कुंभश्च । कालेऽचिरात्सकलकलाः कलयित्वा वयःस्थाः सुखक्रीडां क्रीडन्तो वर्त्तन्ते । इतश्च कोशलायां प्रतापराजचतसृणां राज्ञीनां चतस्रः कन्याः सोमश्री–सत्यश्री–धनश्री–गुणश्रीनामानो वर्त्तन्ते । ताश्चान्यदा प्रीत्या खेलन्त्यः स्वं स्वं मनोरथं क्रमात्प्रकाश्यैवं प्रतिज्ञामकार्षुः–“ यो यामेन श्लोकसहस्रपाठां दत्ते स मे भर्त्ता १, एकवारां श्लोकसहस्रं श्रुतं धारयति स मे पतिः २ , यो यामेन श्लोकसहस्रं नव्यं करोति स मामुद्वहति ३, एकैकस्य श्लोकस्य यः सहस्रमर्थं वक्ति स मे वोढा ४ । ” इत्येतत्तासां वाचः श्रुत्वा पिता स्वयंवरोत्सवार्थं राज्ञो राजकुमारांश्चाकारयत् । तदा च सुग्रीवोऽपि सपुत्रस्तत्रागात् । अथ स्वयंवरमण्डपे निविष्टे राजलोके समागता नरविमानारूढाश्चतस्रोऽपि कुमार्यः प्रतिहार्या राजवर्णने कृते निजनिजप्रतिज्ञां प्रकटयामासुः । ततस्तत्प्रतिज्ञापूरणेऽशक्तत्वात्तूष्णींस्थिते सर्वराजवर्गे सुग्रीवराजादेशाच्चतुर्भिरपि कुमारैः क्रमात् पूरितास्तासां प्रतिज्ञाः । क्षिप्ता बालाभिस्तेषां कण्ठे वरमाला । जातो जयजयारवः । तदा च तद्गुणरञ्जितचेतोभिर्भूपस्तेषां प्रत्येकं प्रत्येकं दत्ता द्वात्रिंशद् द्वात्रिंशत्कन्यकाः । निष्पन्नो विवाहोत्सवः । सर्वेऽपि सम्मानिता राजानः स्वं स्वं स्थानं ययुः । अतीते दशाहोत्सवे सवधूकैः कुमारैः सह सुग्रीवो राजा स्वपुरीं गत्वा राज्यमपालयत् । कुमाराश्चत्वारोऽपि महाप्राज्ञतया ख्यातिं प्राप्ताः । अतो दूरदेशवासिनोऽनेके राजानो राजकुमाराश्च महापण्डितयुक्ताः सर्वशास्त्रसन्देहापनोदार्थं तत्रागत्य राजसभास्थितांस्तान्समुपासन्ते । एवं पितुः

प्रसादात्सफलसुखानि भुञ्जानानां तेषां बहुकालोऽतिक्रान्तः । अन्यदा पुत्रादिपरिवारसहितो नरेश्वरो वने केवलिनं साधुं समवसृतं नत्वाऽप्राक्षीत्–" प्रभो ! केन सुकृतेनामी मत्पुत्रा महाप्राज्ञा जज्ञिरे । " केवली चाग्निशर्मविप्रपुत्रप्रमुखां भवचतुष्ककथां, सर्वामुक्त्वा तृतीयभवे दीक्षामादाय ज्ञानस्य सर्वाशातनात्यागेनाराधनया ज्ञानिनां चाहङ्कारत्यागेन भक्तपानादिशुश्रूषयाऽमीभिरेतत्फलं प्राप्तमित्यवादीत् । तदाकर्ण्य ते राजपुत्रा यद्येकस्य ज्ञानस्याराधनादेतत्फलं जातं, तदा ज्ञानदर्शनचारित्राणां संपूर्णाराधनाच्छाश्वतसुखावसानं फलं भावीति तीव्रसंवेगात्कथमपि पितरावापृच्छय सान्तःपुरं परिवारादिपरिकरं परिहृत्य श्रीकेवलिपार्श्वे प्रव्रज्य निर्मलचारित्रात्केवलज्ञानमवाप्य सिद्धिपदं प्रापुः ॥ ८ ॥

एवं च कामदेवकुमारः केवलिमुखाज्ज्ञानावरणीयकर्मणो बन्धहेतून् श्रुत्वा लोकलज्जया निजाज्ञानताहेतुमपृष्ट्वैव केवलिनं नत्वा स्वसैन्यं गतः । कालादयोऽपि वैरं मुक्त्वा स्वस्थानं गताः । ततो रात्रौ सुप्तं सर्वं जनं मुक्त्वा कामदेवो देवतोपास्यमानं केवलिनं प्रणम्य निजपूर्वभवकथां पप्रच्छ । अथ भगवान् प्रोवाच–" उज्जयिन्यां भीमः क्षत्रियो द्यूतेन खेलन्महाचौरोऽभूत् । स च मातापितृभ्यां निष्कासितोऽरण्ये स्थितश्चौर्येण निर्वहति । अन्यदा काश्मीरदेशादागच्छन्तं जैनं ब्राह्मणं हत्वा पुस्तकभृतं वृषभं गृहीत्वा यावदुन्मुद्रयति तावन्मीपीपोतसमानमलिनखण्डस्यूतवस्त्रवेष्टितपुस्तकान्येव वीक्ष्य कोपात्पादाभ्यां हत्वा हत्वा जज्वाल । तत्र ज्ञात्वोज्जयिनीशेन घातितो भीमो रौद्रध्यानाच्चतुर्थं नरकं दशसागरोपमान्यायुर्भुक्त्वा तन्दुली

मत्स्योऽभवत् । तत्रान्तर्मुहूर्तंजीविताच्च महारौद्रध्यानात्सप्तमं नरकं गत्वा त्रयस्त्रिंशत्सागराण्यायुर्भुक्त्वा ब्राह्मणगृहे भारवाहकः पृष्ठिवाट् जातः । स च तत्र त्रीणि वर्षसहस्राणि भारमुत्पाट्य त्रुटितो भूमौ पतितो भिक्षार्थमागतान् साधून् दृष्ट्वा प्रान्ते भद्रकभावान्मृत्वा कौशाम्ब्यां भद्रश्रेष्ठिकगृहे सोमनामा कर्मकरोऽजनि । सोऽथ श्रेष्ठिना प्रकृत्या बाल्यादपि सर्वप्रकारैर्ज्ञानिज्ञानविद्भक्तया सोमश्रीनामकुलपुत्रिकया विवाहितः । तौ च द्वावप्यासन्नसाधुसङ्गत्या दयातत्परतया निर्म्मलचित्तौ श्रेष्ठिगृहे सर्वकर्माणि कुर्वन्तौ कालमतिचक्रमतुः । अन्यदा चतुर्मासकदिने चैत्यपरिपाटीं कुर्वता सकुटुम्बेन धनेन सार्द्धं तौ द्वावपि प्रतिचैत्यं देवान् पूजयन्तौ साधून्नत्वा दानाधिकारे इत्युपदेशं शुश्रुवतुः--

'सुक्षेत्रे यथा बीजमुप्तं दत्ते फलं बहु । तथेह पुण्यक्षेत्रोप्तं वित्तमल्पमपि ध्रुवम् ॥ १ ॥

पुण्यक्षेत्राणि चामूनि--

नियदव्वमउव्वजिणिंदभवणजिणबिंबपवरपइट्ठासु । वियरइ पसइत्थपुत्थयसुतित्थतित्थयरजत्तासु ॥ १ ॥

तत्रापि पुस्तकक्षेत्रस्य पुण्यमधिकं सर्वेषां पुण्यमार्गाणां प्रकाशकत्वात्, असंख्यजीवप्रतिबोधोपकारत्वाच्च । किञ्च—

सयलम्मि वि जीयलोए तेण इह घोसिओ इमो याओ । इक्कंपि जो दुहत्तं सत्तं बोहेइ जिणवयणे ॥ १ ॥

ततो यद्येकेन जीवेन बोधितेन सर्वजीवलोककृतामार्युघोषणायाः फलम् । तदाऽनेकजीवप्रतिबोधस्य

फलं येन वक्तुं शक्यते । एकोऽपि जीवो बोध्यते शास्त्रोपदेशेन । शास्त्रस्य च पुस्तकमेवाधारः । ततो येन पुस्तकक्षेत्र सत्यापितं तेन सर्वाणि पुण्यक्षेत्राणि सर्वे च पुण्यविधयः सत्यापिताः।' इत्यादि श्रुत्वा सोम-सोमश्रियौ धनश्रेष्ठिना सहोपवासं कृत्वा गृहं गत्वा स्वद्रव्यसामर्थ्येन सर्वपुण्यक्षेत्रमुख्यं पुस्तकपुण्यक्षेत्रमेवाराध्यते । इति पर्यालोच्य प्रातः स्वधनेनैव सिताघृतपायसं योगं कृत्वा मिथः स्थाले परिवेष्य यावद् भोक्तुमुपविशतः स्म । ततः षोडशमासक्षमणसाधुसमेतं वीक्ष्य सम्यग्भावतया तस्मै पायसं दत्त्वा भोगफलमर्जयतः स्म । ततः षोडशदीनारैः सोमो द्वादशदीनारैः सोमश्रीः पुस्तकं लेखयामासतुः । प्रान्तकाले द्वावप्यनशनतो मृत्वा सौधर्मदेवलोके स्वर्गसुखानि भुक्त्वा सोमो भवानवतीर्णः सोमश्रीश्च सौभाग्यमञ्जरीति । पुस्तकानामाशातनाकरणान्मूर्खोऽभूत् । अथ च पुस्तकलेखनपुण्यात्षोडशमासैर्धौतसर्वकश्मलोऽतीव विद्वान् भविष्यसि । " इति केवलिवचः श्रुत्वा पादयोर्लगित्वा 'भगवन् ! अज्ञानतः कृतज्ञानाशातनायाः प्रायश्चित्तं देहि ।' इति कुमारेण विज्ञप्ते केवली प्रोचे-" कुमार ! संप्रति मध्यमद्वाविंशतितीर्थंकरवारकेऽष्टमासिकं निर्मलं तपस्तच्च षोडशमासैरेकान्तरोपवासैर्विधेहीति । " अत्रान्तरे तत्र स्थिता सरस्वती देवताऽवोचत्-" चतुरो ज्ञानकोशान् कारय यथा विशेषलाभः स्यात् । " तावन्मंत्रिणोक्तम्-" देवि ! धर्मान्तरायकृदेष वादसमुद्रः कथं तार्यः । " देव्योक्तम्-" श्रीवज्रनाभकेवलिप्रसादाधिष्ठितैर्भाव्यम् । सर्वमहं जाने । किञ्च सौभाग्यमञ्जर्याः सौधे राजहंसौ स्वयंवरे पाञ्चालीवादोमारूपिणीति सर्वं तापसयाराधितो यक्षोऽकार्षीत । अथ सम्यक्त्वमूलं श्राद्धधर्मं भजस्व

यथा सर्ववाञ्छितसिद्धिः स्यात् । ततः कुमारः सपत्नीकः केवलीपार्श्वं तं प्रतिपद्य स्वसैन्य ययौ । केवली लोक प्रतिबोधाय विजहार । तावत्प्राप्ताः काश्मीरदेशात्पण्डिताः पूर्वमाहूताः सर्वेपि विख्याता भूभुजः । निष्पक्षो वादमण्डपः । सौभाग्यमञ्जरी परपुरुषं स्वप्नेऽपि नेच्छति । परं यो हारयिष्यति स यावज्जीवमन्यस्य सेवां विधास्यति, इति पणो जातः । अन्यदिने मिलिताः सभ्याः, निविष्टा मञ्चेषु भूपाः । उपवेशिता पण्डिताः । जातो वादः । सरस्वतीप्रसादाज्जीतं कामदेवेन । जयजयारवः । भूषितं यशसा विश्वम् । ततः सेवकीभूतैः कालादिभिः सह महोत्सवपुरः संचलितः स कुमारः स्वपुरं प्रति । अथ राजा श्रीसूरदेवः स्वपुत्रस्य कीर्त्तिं श्रुत्वाऽतीव हृष्टोऽविच्छिन्नप्रयाणैः आसन्नागतस्य सन्मुखो जगाम । कुमारो भूतललुठन्मौलिस्तातं ननाम । अथो मिथोचितकथादिरङ्गे जायमाने पुरे च प्रत्यासन्नीभूते राजा प्रवेशोत्सवविधापनाय पुरो भूत्वा पुरं ययौ । कुमारः सरस्तीरे ससैन्यः स्थितः । चन्द्रलेखा कदलीवने क्रीडार्थं गता सुवर्णपिच्छं केकिनं दृष्ट्वा कुमारायाकथयत् । कुमारोऽपि कौतुकाक्षिप्तचेताः शनैः शनैस्तत्र गत्वा लीलयोत्प्लुत्य यावन्मयूरमारुरोह तावत्केकी सहसोत्पपात । एष यात्येष यातीति क्षणाददृशोऽभूत् । तदा चास्तंगतो रविः । प्रसृतं विश्वे तमः शोकेन पूर्णं सैन्यं तारमरोदीत् । सौभाग्यमञ्जरी नैमित्तिकं गत्वा फलादिकं दत्त्वा पृष्टः सः प्रोचे–" न धार्याल्पापि शोकधीः । सार्द्धवर्षेण कुमारः प्राप्तैश्वर्योऽत्रैवैष्यतीति ।"-जातो हर्षः । अथामात्यः कुमाराग- मं यावदत्रैव स्थीयतामिति तत्रैव सेनामस्थापयत् । इतश्च कलापी कुमारं गृहीत्वा वैताढ्यगिरौ विद्याधरच-

पुरान्तःसौध-
क्रवर्तिनो रत्नाङ्गदस्य रथनूपुरपुरोद्याने मुमोच । ततो रत्नाङ्गदचक्री संमुखमागत्य विनयपूर्वकं पुरान्तःसौध-
मध्ये प्रवेश्य सिंहासने निवेश्योवाच–" कुमारेन्द्र ! शृणु– मत्पुत्री रत्नमञ्जरी सिद्धायतने देवान् पूजयित्वा
मण्डपे मधुरस्वरेण स्तोत्रमेकचित्ता पठन्ती देवार्चनार्थं तत्रागतया लक्ष्म्या दृष्टा सस्वरा श्रुता । ततस्तुष्टया
वरो दत्तः–' कामदेवस्ते वरो भूयात् ।' स चाधुना सौभाग्यमञ्जरीं परिणीयायोध्यां स्वां पुरीं प्रतिव्रजन्नस्ति ।
इति लक्ष्मीवचो मया ज्ञात्वा केनचिच्छद्मना त्वमत्रानायितः ततोऽस्या मत्पुत्र्याः पाणिग्रहणं कुरु । " कुमारो-
ऽवादीत्–" राजेन्द्र ! षोडशमासीमेकान्तरोपवासान् कृत्वा मया कार्यान्तराणि कार्याणि ।" चक्री प्राह–
"साधय स्ववाञ्छितम् ।"ततः कुमारश्चक्रिसान्निध्यात्त्रिकालं सिद्धायतने देवपूजां कुर्वन्नेकचित्तः प्रायश्चित्ततपः
सम्पूर्णमकरोत् ।अथ च क्षीणे ज्ञानान्तरायकर्मणि लक्ष्मी दत्ता रोहिण्यादयो महाविद्या लीलया साधयामास ।
अथ शुभलग्ने नवनवैर्महोत्सवैः रत्नमञ्जरीं परिणीय तत्रान्यत्र च सर्वविद्याधराधीशबहुमानं लभमानो
मासत्रयं तत्र स्थित्वा दिव्यं विमानमारुह्य सपत्नीको विद्याधरसहस्रपरिवृतो महत्या छत्रचामरादिऋद्ध्या
राजमानो दिव्यवाद्यनादेन ब्रह्माण्डमापूरयन्नेष महानंद एष महोत्सवः समेतीति सैन्यकैरुत्फुल्ललोचनमी-
क्ष्यमाणः सार्द्धवर्षातिक्रमे निजसैन्यमागात् । राजा सूरदेवोऽपि तज्ज्ञात्वा निवृत्तशोकप्रमोदमेदुरश्रीः सान्तः-
पुरपरिवारः कुमारदर्शनोत्कण्ठया तत्रागत्य दूरादपि लुठन्तं भालेन पादौ स्पृशन्तं हर्षाश्रुधारां वर्षन्तं सुतं
कराभ्यामूर्ध्वीकृत्योभयकराभ्यां गाढमालिङ्गयन् परमानन्दमवाप। तं स एवाज्ञासीत् केवली वेति । अथ च–

संकटीभूतभूगोलो गजाश्वरथपत्तिभिः । विद्याभृतां विमानैस्तु सम्पूर्णव्योममण्डपः ॥ १ ॥
हयवाद्यपटुध्वान–बधिरीकृतदिग्गणः । कान्ताद्वयसमायुक्तः पट्टमातङ्गमाश्रितः ॥ २ ॥
पित्रानुगम्यमानाध्वा महार्द्ध्या विभूषितः।शुभेऽह्नि स्फारशृङ्गारः कुमारः प्राविशत्पुरीम्॥३॥त्रिभिर्विशेषकं।

अथ राजा बहुमानपूर्वं सर्वान् भूचरान् खेचरान् समस्तभूपालान् विसृज्य कुमारसेव्यमानपादश्चिरं राज्यं पालयामास ।

अथ वर्द्धापयदागत्य भूपालं वनपालकः । स एव केवलज्ञानी त्वदारामसुपागमत् ॥ १ ॥
कः स एवेति राज्ञोक्ते बभाषे वनपालकः । स्वयंवरात्कुमारेणागच्छताऽवन्दि यः पथि ॥२॥
दत्त्वा दानं ततस्तस्मै नृपतिः पारितोषिकम् । वनं गत्वा मुनिं नत्वा श्रुत्वा तत्त्वार्थदेशनाम् ॥३॥
मध्ये पुरं समागत्य सत्यवैराग्यरङ्गतः । पुत्रं राज्येऽभिषिच्याथ प्रवव्राजान्तिके मुनेः ॥४॥ युग्मम् ॥
ततो राज्यं पितुः प्राप्य कामदेवनरेश्वरः । पितेवातुल्यवात्सल्यात्पालयत्यनिशं प्रजाः ॥ ५ ॥
सम्पूर्णान् भारतीकोशान् चतुरश्चतुरो नृपः । निर्माप्यार्चयति स्वान्तशुद्ध्या सिद्धान्तयुक्तिभिः॥६॥

तथाहि–जीवाभिगमे विजयदेवोत्पाते राजप्रश्नीये सूर्याभदेवोत्पाते एवं दृश्यते–"पुत्थयरयणं लोमहत्थएणं पमज्जइ । दिव्वाए उदगधाराए अभिसिंचइ । सरसेण गोसीसचंदणेण अणुलिंपइ । अग्गेहिं वरेहिं गंधेहिं अच्चिणइ । जाव धूवं दलइ ।" इत्यागमवचनाधीनरागपूजावत् पुस्तकपूजाविधिः ।

भाग्येन विदधे तस्य लक्ष्मीरक्षीणकोशताम् ।अंतोऽसौ सर्वलोकानां मुमुचे सकलान्करान् ॥१॥
प्रजास्तस्मिन्नृपेऽभूवन्निरातङ्का निरामयाः । चिरायुषो महासौख्याः शुद्धसन्ततिशालिनः ॥ २ ॥
अथो पृथिव्यां सर्वत्र पटहोद्घोषपूर्वकम् । प्रावर्तयन्महाज्ञानसत्रागारं नराधिपः ॥ ३ ॥
प्रतिग्रामं प्रतिव्रजं... ... ... । राजा नियोजयामास पाठकान्शास्त्रशिक्षणे ॥ ४ ॥
सम्यक्शास्त्राण्येकचित्तो यः पठिष्यत्यनारतम् । पूरयिष्यामि तस्याहं भोजनाच्छादनादिकम् ॥ ५ ॥
राजनिर्मापितां श्रुत्वा घोषणामिति सर्वतः । अजायन्त प्रजाः सर्वाः शास्त्राभ्यासैकलालसाः ॥ ६ ॥
लक्ष्मी सरस्वती चापि विरोधं स्वस्वभावजम् । विमुच्य भूपं भेजाते रेजाते ते ततोऽधिकम् ॥ ७ ॥
ये भूपा भरतार्द्धेऽस्मिन् विक्रमाक्रान्तशात्रवः । तैरप्यसेवि तत्पादद्वयी पुण्यानुभावतः ॥ ८ ॥
तस्य विद्याबलेनाथ नाथा विद्याभृतामपि । वशीभूताः पदाम्भोजसेवाहेवाकिनोऽभवन् ॥ ९ ॥
एवं षोडशभिर्भूपसहस्रैः सेवितक्रमः । वासुदेव इव श्रीमान् कामदेवो व्यराजत ॥ १० ॥
सौभाग्यमञ्जरीकुक्षिसरस्यां राजहंसवत् । राजहंसकुमारोऽभूद्गुणानामेकमास्पदम् ॥ ११ ॥
अन्यदा देहकार्याणि कृत्वालङ्कृतभूषितः । भेजे भद्रासनं भूपः सर्वर्द्धिसंमन्वितः ॥ १२ ॥

इतश्च-राज-युवराज-महाराज-राजमन्त्रि-श्रेष्ठि-सार्थवाह-सेनापतिसहस्रसंपूर्णायां सप्रभायां तस्यां सभायां जायमानेऽभङ्गे नाट्यादिरङ्गे, प्रवृत्तासु पौराणिकानां पूर्वपुरुषसंकथासु, निपात्यमाने विपश्चि-

तामप्रमादे शास्त्रसंवादे, विधीयमानेषु कारणिकै राज्यसारेषु व्यवहारेषु, सत्याप्यमानासु नियोगिभिर्लेखका दिचिन्तासु समानीतस्तत्र बालहारैरुदारसारशृङ्गारः श्रीराजहंसः कुमारः। तं च पञ्चवार्षिकं मरालबालमिव सकलभूपालोत्सङ्गकमलेषु संचरन्तं निरीक्ष्य महामोहोन्मुच्यमाने मानसे चिन्तितवान्महीपतिः श्रीकामदेवः– " अहो। कोऽयम्, कस्य सुतः, को वेत्ति, कुतः समेतः, क्व यास्यति ततः कोऽनेन सम्बन्धः। केवलं पृथैवासौ सर्वस्नेहसम्बन्धः–

एक उत्पद्यते जन्तुरेक एव विपद्यते। कर्माण्यनुभवत्येकः प्रचितानि भवान्तरे १॥

किञ्च—

एगो मे सासओ अप्पा नाणदंसणसंजुओ। सेसा मे बाहिरा भावा सव्वे संजोगलक्खणा ॥ १ ॥
संजोगमूला जीवेण पत्ता दुक्खपरंपरा। तम्हा संजोगसंबंधं सव्वं भावेण वोसिरे ॥ २ ॥

इत्याद्येकत्वभावनां भावयन् भूमीपतिः क्षपकश्रेणीमारूढः क्षीणेषु चतुर्ष्वपि कर्मसु केवलज्ञानमवाप। ततो "जयतु समुत्पन्नकेवलज्ञानश्रीकामदेवराजर्षिः" इत्याकाशवाणीमुच्चरन्त्या शासनदेवतया दत्तो वेषः श्रीकामदेवमहामुनिः केवलानन्दमहोत्सवान्तरमहो किमेतदिति साश्चर्यं राजसहस्रैरनुगम्यमानो महीमण्डले चिरं विहृत्यानेकलोकान्प्रतिबोध्य महोदयपदं भेजे।

राजहंसकुमारस्तु सर्वराजप्रधानपुरुषैस्तस्य पट्टे प्रतिष्ठितः प्राज्यराज्यं पालयन् सकलश्रेयःसुखानि बुभुजे।
एवं श्रीकामदेवक्षितिपतिचरितं नन्दषड्वार्द्धिभूमीसंख्ये श्रीमेरुतुङ्गाभिधगणगुरुणा वत्सरे प्रोक्तमेतत् ।
श्रुत्वा ये पुस्तकानां विदधति विबुधा लेखन वाचनार्चाग्रुरुणां भक्तिं च ते स्युः सकलशिवसुखप्राज्यलक्ष्मीनिवासाः ॥१॥
श्लोकसप्तशतान्यष्टापञ्चाशिच निश्चिता । अत्र सप्ताक्षराणीति प्रत्यक्षरनिरीक्षणात् ॥ १ ॥

## ॥ इति कामदेवकथा समाप्ता ॥